# उदयमाना तारा



यदि भवताम् परिचये कुटुम्बे परिसरे कोऽपि बाल्ये एव प्राप्तयशाः बालः अस्ति चेत् कृपया तस्य/तस्याः विवरणं स्वसन्दर्भं दत्त्वा अस्मान् प्रति प्रेष्यताम्।

Young Achievers-RCM,
Chandamama India Ltd,
No:2 Ground Floor, Swathi Enclave, Amman koil street, Vadapalani, Chennai-26
(or)
online@chandamama.com

'गौरव राजेश भण्डारी' इति त्रयोदशवर्षीयः ८ कक्षायां पठन् बालः। पुणे इत्यत्र सिंबिऑसिस् शालायाम् अधीयानः गौरवः गतेभ्यः त्रिभ्यः वर्षेभ्यः 'व्हॉली बॉल' क्रीडां क्रीडति। तदारभ्य तेन ३० शालानां क्रीडागणाः पराजिताः। सः स्वस्य शालायाः सङ्घनायकः।

२०११ तमे वर्षे तेन 'उदयमानः क्रीडापटुः' इति तथा 'उत्तमः क्रीडापटुः' इति द्वे पारितोषिके प्राप्ते। एते पारितोषिके पन्हाळा-अन्ताराष्ट्रीयक्रीडाप्रशिक्षकेण अजितपाटिलमहोदयेन प्रदत्ते।

'पूना स्पोर्टस् ॲथ्लेटिक्स असोसिएशन' द्वारा अपि सः सर्वक्षमः क्रीडापटुः इति स्मृतिचिह्नं प्राप्तवान्। सखाराम मोरे क्रीडा प्रतिष्ठानस्य 'मालिकायाः सर्वोत्तमः' इति पारितोषिकं प्राप्तं तेन।

स्वस्य प्रशिक्षकयोः, श्री. कोकटे तथा श्री.बामणे इत्यनयोः परिश्रमेण एतद् साध्यम् इति मन्यते सः। तथा च मातापित्रोः प्रोत्साहनकारणादेव इदं यशः। अध्ययने दत्तचित्तः सः ॲबॅकस, तरणं, सिन्थेसायझर वादनं तथा नृत्यम् इत्यपि कौशलेषु प्रवीणः।

तेषु विषयेषु तेन प्राप्तानि पदकानि प्रमाणपत्राणि एव तस्य साक्षीभूतानि।

अल्पीयसि वयसि यद् गौरवेण साधितं तदर्थं प्रयत्नः, आसक्तिः अनन्यता च आवश्यकी। शालायामपि अवहितः भूत्वा यावत् सम्यक् अध्ययनं शक्यं तावत् सः करोति। गौरवः स्वयं कठोरपरिश्रमाणां विजिगीषुवृत्तेः च उदाहरणम्।

Grant in Aid provided by Rashtriya Sanskrit Sansthan Deemed University



August 2012 ₹25/-

*Founded by* **B. Nagi Reddi and Chakrapani**



**Circulation:**
circulation@chandamama.com

**Asst. Manager - Sales & Circulation:**
Subhankar Rej

**Sales Officer - Circulation :**
K. Ravishankar

**Advertisement :**
sales@chandamama.com

**Customer Help :**
Ph: 022 40786043
customerhelp@chandamama.com

**Head Office :**
**CHANDAMAMA INDIA LTD.,**
P.O.Box No:19407, Mumbai-400093
Phone +91 22 28312872 / 28311849
Email:chandamama@chandamama.com
Website : www.chandamama.com

Published, Printed and Owned by CHANDAMAMA INDIA LTD.,
Published and Printed on their behalf by Prashant Sharad Muleker
Published at B-3, Cross Road 'B', MIDC, Andheri (East) Mumbai - 400093.
Printed At :- Kala Jyothi Process Pvt. Ltd, S.No.185, Kondapur, R.R.District-500133, Andhra Pradesh.
Editor :- Prashant Sharad Mulekar

S

# अन्तरङ्गम्

## चन्दमामा

Volume-3 August 2012 Issue-08

# स्वातन्त्र्यदिनम्

**ऑ**गस्टमासस्य सञ्चिकायां सम्पादकीयं लेखं लेखितुकामः अहं यदा लेखनीम् आयासयितुम् उद्युक्तः, तदा मया गतवर्षे ऑगस्टमासे प्रकाशितं सम्पादकीयं पठितम्। यद्यप्यहं तदेव समानं सम्पादकीयम् अस्यामपि सञ्चिकायां प्रकाशयामि तथापि चर्वितचर्वणदोषभाक् न भवामि, यतः प्रकाशितपूर्वमपि तत् लेखनम् अद्यापि औचित्यं भजते।

पञ्चषष्ठेः वर्षेभ्यः प्राक् आङ्गलजनेभ्यः स्वातन्त्र्यं सम्प्राप्तवन्तः वयं तत् साकारतां नेतुं प्रयतमानाः सन्तोऽपि अद्यावधि साकल्येन फललाभाभावात् ताम्यामः। प्रतिवर्षं वर्षागमनं प्रतीक्षमाणान् आकाशे बद्धदृष्टीः अस्मान् दुर्भिक्षशंका सुतरां बाधते। देवश्चेत् कुप्यति, न च वर्षति, कुतो वा धान्यागमः भवेत् इत्येतत् भयं कृषकाणां हृदयानि शल्यवत् तुदति। अस्मद्देशवासीयानां प्राथमिक्यः अपि आवश्यकताः पूर्ततां न यान्ति। अस्माकं कार्यप्रणालिः अत्यधिककार्यभारं निर्वोढुं न शक्नोति गलितगात्रा च जायते। अमूलगामिनी अस्माकं प्रगतिः समाजस्य सर्वानपि स्तरान् न स्पृशति। यानि नैतिकमूल्यानि अस्माकं राष्ट्रबान्धवैः स्वरक्तसेचनेन सुपोषितानि, तानि साम्प्रतम् उपेक्षितानि दृश्यन्ते।

परन्तु सतीष्वपि नैकासु विपत्सु न्यूनतासु च अस्माभिः आशा न त्याज्या। इदानीन्तनयुवकाः आत्मविश्वासेन सम्पूर्णाः। तान् सुयोग्यपरिवर्तनचिकीर्षूः दृष्ट्वा वयं दृढम् आशास्महे यत्, पूर्वं कदाचित् उप्तानि प्रगतिबीजानि भविष्यत्काले सर्वस्यापि ईप्सिते राष्ट्रोत्थानरूपे फले परिणतानि भविष्यन्ति।

एतस्मात् मासात् परं चन्दमामायाः सन्थालीपत्रिका न प्रकाश्यते इत्येतां दारुणवार्तां दुःखेन व्याकुलितमनसः वयं भवद्भ्यः निवेदयामः। पाठकानाम् क्षीणः प्रतिस्पन्दः, सर्वकारपक्षतः अस्यां भाषायां बालानां कृते पत्रिकाप्रकाशनार्थं साहाय्यस्य नितराम् अभावः च अस्य दुःखदनिर्णयस्य हेतू। तथापि वयं बहुपाठकसुखाय चन्दमामाप्रकाशने यथाशक्ति प्रयत्नान् अनुवर्तयामः।

सर्वेभ्यः सस्नेहं स्वातन्त्रदिनस्य हार्दाः शुभाशयाः वितीर्यन्ते। *- सम्पादकः*





# वाचकानां पुटोऽयम्



**बा**ल्ये चतुर्थ्यां कक्षायां पठता मया षडाणकैः पप्रथमं चन्दमामापत्रिका क्रीता। तदा आरभ्य मम सम्पूर्णमपि कुटुम्बं नित्यमेव चन्दमामां पठति। कश्चन समयं यावत् यदा चन्दमामायाः प्रकाशनं खण्डितं, तदापि चन्दमामया सह वर्तमानः अस्माकं स्नेहबन्धः अविच्छिन्नः आसीत्। मम पुत्रेभ्यः पौत्रेभ्यश्च चन्दमामा अतीव रोचते। मम पौत्राः चन्दमामास्थाः कथा श्रावयितुं मां सर्वदा प्रार्थयन्ते। यदा मम मित्रं साम्प्रतं लन्डन्-नगरे पठता मम पौत्रेण सह मेलितुम् अगच्छत्, तदा सः तस्य कृते उपायनरूपेण चन्दमामापत्रिकाम् अनयत्। तां पत्रिकां दृष्ट्वा स्वबाल्यं स्मरता मम पौत्रेन अस्माकं सर्वेषां कुटुम्बीयानां तत्र उपस्थितिः अनुभूता। चन्दमामायै नैकाः शुभाशयाः!

*- एस्. अमरावती, ककिनाड, आन्ध्रप्रदेशः*

**ना**तिचिरात्प्राक् मया चेन्नयीस्थः चन्दमामाकार्यालयः गतः। चन्दमामायां भृशं परिवर्तनं दृश्यते। मुखपृष्ठचित्रं कथायाः अङ्गीभूतानि च चित्राणि इत्यादिभिः अंशैः सह विराजमाना अद्यतनचन्दमामा सुन्दरीः पुरातनसञ्चिकाः स्मारयति। एकपृष्ठात्मिककथाः पिपठिषुः अहं चन्दमामापठनाय उद्युक्तो भवामि। अहो रसात्मिकाः ताः! निरुपयोगिसाधनम् इत्येषा गतसञ्चिकायां प्रकाशिता टुप्कथा पुरातनचन्दमामायां वर्तमानानां मनोहरकथानां साम्यत्वं भजते। मच्छद्मदन्तान् साधनरूपेण धृत्वापि कुक्कुटशावकः शृगालस्य भयं जनयितुं न शक्नोति, यतः स्वभावेनैव सः भीरुः कोमलहृदयः इत्येतत् तथ्यं कथैषा दर्शयति। चन्दमामायाः ऋते का वा अन्या पत्रिका प्रतिमासं विंशतिं कथाः प्रकाशयति?

*- गङ्गिसेट्टीशिवकुमारः, नेल्लोर्, आन्ध्रप्रदेशः*

**ग**तेभ्यः चत्वारिंशद्वर्षेभ्यः चन्दमामां पठाम्यहम्। चन्दमामायाः सद्गुणेषु लुब्धः अहं साम्प्रतं प्रकाश्यमानानां कथानां हेयत्वात् असन्तुष्टोऽस्मि। देवीभागवतं, वीरहनुमान्, महाभारतम् इत्यादयः पारम्पारिककथाः सम्प्रति न प्रकाश्यन्ते। चन्दमामा तु एतासामेव कथानां प्रकाशनेन कीर्तिं प्राप्नोत्। इदानीं तु चन्दमामायाः अयं सारः न त्यक्तः दृश्यते। परं शिथिलालयकथाः स्तुतिभाजनम् इत्यत्र नास्ति शंकालेशोऽपि।

*- विजयचौहानः, उत्तरप्रदेशः*

**च**न्दमामायाः गतसञ्चिका महता विलम्बेन आपणेषु उपलब्धा अभवत्। अस्मिन्नवसरे अतीतेऽपि तृतीये सप्ताहे नूतनसञ्चिका नोपलभ्यते। चन्दमामाप्राप्तौ महदौत्सुक्यं तद्गतकथापठने च महान् उत्साहः अस्याः पत्रिकायाः चारुतायाः रसमयतायाश्च फलम्। परं मन्ये यत्, अन्यासां पत्रिकाणाम् अपेक्षया चन्दमामायाः आपणेषु विलम्बेन उपलब्धिः अस्याः लोकप्रियतायां प्रचारे च विपरितं

परिणां जनयेत्। कृपया चिन्त्यताम्! *- राजेशः हैदराबाद्, आन्ध्रप्रदेशः*

चन्दमामायाः सञ्चिका प्राप्ता। एकश्वासेन इव मया सर्वापि पत्रिका अन्तं यावत् पठिता। अस्मिन् ग्रीष्मर्तौ चन्दमामेयं शीतलान् सुधाकिरणान् विकिरति इव इत्येव भावः मनसि जागरितः। सकलापि सञ्चिका नश्चेतः समतोषयत्। सर्वोऽपि निर्मातृगणः तदर्थं स्तुत्यर्हः। चन्दमामायाः मूल्यं वर्धते इति श्रुतम्। तेन न कापि चिन्ता जायते। वस्तुतस्तु महार्घेषु सर्वेष्वपि अद्यतनसाधनेषु चन्दमामायाः मूल्यम् अद्यापि कथं न वर्धितं भवद्भिः इत्येव प्रश्नः अनुभूयते स्म। साम्प्रतकाले मूल्यवर्धनं युक्तमेव। चन्दमामायाः मूल्यं यत्किमपि भवतु, अस्मत्सदृशाः पाठकाः सदैव चन्दमामां कामयेयुः। *- प्रा. सन्दीपकुमारः, अमृतसरः*

अस्माभिः चन्दमामा महता विलम्बेन प्राप्ता। सर्वाः अपि टुप्कथाः चित्ताकर्षिकाः। 'रहस्यम्', 'निरुपयोगिसाधनम्', 'कष्टकरः', 'योग्यप्रशंसा' इत्येताः कथाः विशेषानन्दम अजनयन्। इयता सङ्ख्यया नीतिकथाः एकत्र एकस्यामेव पत्रिकायां प्राप्यन्ते इति आश्चर्यास्पदमेव। हार्दम् अभिनन्दनम्! *- नागेश्वररावः, एलुरु, आन्ध्रप्रदेशः*

अहं स्वाती। २० वर्षमितवयस्का। अहं देहलीनगरे वसामि। आ बाल्यादहं चन्दमामां पठामि। चन्दमामापठनं मम कुटुम्बे सर्वेभ्यः रोचते। प्रतिवर्षं प्रकाशितानां चन्दमामापत्रिकाणां सञ्चयः मया कृतोऽस्ति। अत्र विद्यमानाः कथाः सुन्दराणि च चित्राणि मम मनः आकर्षन्ति। पुरातनकथाः रम्यतराः आसन्। कृपया चन्दमामायाः पुरातनं रूपं पुनरपि प्रकाशम् आनयतु!

*- स्वाती, दिल्ली*

'रहस्यद्वयम्', 'श्रीमान् प्रामाणिकः' चेति कथे उत्तमान् नीतिमूल्यान् पाठयतः। सज्जनसमाजः दुर्जनसमाजः इत्येतयोः उचितं वर्णनं शंकराचार्यैः कृतम्। 'शिक्षकः न खलु ज्ञानविक्रेता' इत्येतत् पाठशालासञ्चालकस्य प्रतिपादनं योग्यम् आसीत्।

*- यज्ञन्नाशास्त्री, वेटापालेम, आन्ध्रप्रदेशः*

दिनद्वयात्प्रागेव मया चन्दमामायाः नूतनसञ्चिकाः प्राप्ता। मुखपृष्ठे वर्तमानं निद्रारतस्य कुम्भकर्णस्य चित्रम् अतीव कलापूर्णम्। पुरातनचन्दमामायाः चित्राणि दृष्ट्वा यः आनन्दः अस्माभिः अनुभूयते स्म तादृशः एव आनन्दः अस्य चित्रस्य दर्शनात् प्राप्तः। अस्यां सञ्चिकायां प्रकाशितः 'चन्दमामा-आर्ट-बुक' तः गृहीतं चित्रमपि अतीव रमणीयमासीत्। तस्मिन् श्रीकृष्णस्य दर्शनम् अतीव मनोहरम्। शिथिलालयकथायां वर्तमानं पूर्णपृष्ठात्मकं चित्रं वनश्रियः साकल्येन दर्शनं कारयति। अहो सुन्दराणि चित्राणि! निःसंशयं चन्दमामा स्तुत्यर्हा। *- रामचन्द्रय्यः, कर्नुल, आन्ध्रप्रदेशः*

Avail the loyalty bonus!

**Chandamama Subscribers will get flat 10% off on subscription renewals! (All Editions - within India)**



# Chandamama!

Because stories make the world go round...

## Choose

your Chandamama!

Go to www.chandamamashop.com & subscribe Now!!



You can also subscribe online at: **www.chandamamashop.com**

**Chandamama is available in English and 11 regional languages.**
**Junior Chandamama for children above 4 years is available only in English.**

I want to subscribe to / gift / renew subscription for the following editions of Chandamama:

- ☐ English ☐ Telugu ☐ Tamil ☐ Kannada ☐ Hindi
- ☐ Marathi ☐ Gujarati ☐ Oriya ☐ Bengali ☐ Sanskrit
- ☐ Malayalam ☐ Assamese ☐ Junior (Only in English)

Name: ..............................................................

Date of Birth: .............................. Sex : ..............................

Address: ..............................................................

..............................................................

..............................................................

.............................................. City: ..............................

State: .............................. Pin: ..............................

Telephone: ..............................................................

Mobile: ..............................................................

Email: ..............................................................

Subscription Number (for renewals): ..............................

Gift Subscription to the following address:

..............................................................

..............................................................

..............................................................

..............................................................

Enclosed Cheque/DD* for Rupees..............................

Cheque/DD No ..............................

favouring Chandamama India Ltd on..............................

..............................................................bank.

* Your subscription will commence in 6 weeks.

Please mail the subscription form to:
**Chandamama India Limited,**
P.O.Box No:19407, Mumbai-400093.
Phone +91 22 28312872 / 28311849
Email: subscription@chandamama.com
You can also subscribe online at : www.chandamamashop.com

| Take Your Pick! | 1 YEAR | 2 YEARS | 3 YEARS | 4 YEARS | 5 YEARS |
|---|---|---|---|---|---|
| ENGLISH Rs. 30/- per copy) | Rs. 360 | Rs. 645 | Rs. 915 | Rs. 1150 | Rs. 1350 |
| You Save | | Rs. 75 | Rs. 165 | Rs. 290 | Rs. 450 |
| REGIONAL Rs. 25/- per copy) | Rs. 300 | Rs. 540 | Rs. 765 | Rs. 960 | Rs. 1125 |
| You Save | | Rs. 60 | Rs. 135 | Rs. 260 | Rs. 375 |
| JUNIOR Rs. 20/- per copy) | Rs. 240 | Rs. 430 | Rs. 610 | Rs. 765 | Rs. 900 |
| You Save | | Rs. 50 | Rs. 110 | Rs. 195 | Rs. 300 |

** conditions apply

**Annual Subscription Overseas :** US $40 for English Chandamama, US $30 for Regional Languages, US $25 for Junior Chandamama (including shipping and handling charges) by air mail.

# मम स्मृतयः - कन्नड

**न**व-सप्त-नवैकतमे (१९७९) वर्षे मया एस्. एस्. एल्. सी. परीक्षा उत्तीर्णा। अहं कुटुम्बस्य ज्येष्ठपुत्रः। धनागमस्य असौकर्येण अहं शिक्षणात् विरतः। मम षट् भ्रातरः भगिन्यः च। गर्वेण वदामि यत् तेषु दिनेषु येन मम मार्गदर्शनं कृतं, मह्यं महाविद्यालयात् अपि अधिकतराः जीवनानुभवाः दत्ताः, येन मम प्रज्ञा प्रदीप्ता सः अद्वितीयः शिक्षकः आसीत् - चन्दमामा।



Name: Rajendra Hegade
Occ: Revenue, dept.,
Haveri, Karnataka.

अहं नियमितरूपेण ग्रन्थालयं गत्वा चन्दमामां पठामि स्म। यदा मम जनकः कार्यात् विरतः तदा मया पी.डब्ल्यू.डी. विभागे भारवाहकस्य कार्यं स्वीकृतम्। तदा मम मासिकवेतनं केवलं १५० (पञ्चाशधिकशतम्) रूप्यकाणि आसीत्। तस्मात् वेतनादपि क्रमेण चन्दमामां क्रीत्वा पठामि स्म।

चन्दमामायाः कारणेन मम शब्दसंग्रहः वृद्धिं गतः मया ज्ञानमपि लब्धम्। यथा नियमं चन्दमामां पठित्वा मया लेखनकौशलं प्राप्तम्। मम लेखाः नैकेषु मासिकेषु प्रकाशिताः जाताः। चन्दमामायाः नीतिकथाभ्यः मया विवेकबुद्धिः प्राप्ता साध्वसाध्वोः भेदः ज्ञातः। अन्ततो गत्वा चन्दमामा मम प्रिया पत्रिका जाता।

एकनवनवैकतमे (१९९१) वर्षे अहम् आयविभागे (रेवेन्यु डिपार्ट्मेन्ट्) कार्यरतः अभवम्। तत्रापि चन्दमामाकथाभिः लेखैः चैव मम साहाय्यता कृता। तैः एव ग्रामीणजनानां मनोभिः मम परिचयः कारितः, मुग्धजनैः सह व्यवहारे मम मार्गदर्शनं कृतम्। येन पुस्तकेन दारिद्र्ये सान्त्वनं अन्यविषयेषु निमग्नं भवितुं प्रेरणा दत्ता तदेव सम्पत्कालेऽपि मम प्रियं पुस्तकं वर्तते। सम्पत्तिः दूरदर्शनं चलभाषः इत्यादीः आधुनिकीः सुविधाः कल्पयित्वा अस्मान् मोहयति। तथापि मम जीवने चन्दमामायाः विशेषं स्थानं सदैव भविष्यति।

चन्दमामायाः कारणेन मया आर्जवयुक्तं जीवनं जीवितम्। स्वामिविवेकानन्दस्य, शारदादेव्याः, रामकृष्ण-परमहंसानां च चरितानि चित्तसंस्कारान् कुर्वन्ति। चन्दमामायाः कारणादेव मानवेन स्वस्य षड्रिपुभिः काम-क्रोध-लोभ-मोह-मद-मत्सरादिभिः सह कथं व्यवहर्तव्यमिति ज्ञातम्। चन्दमामा एव एतेषु विषयेषु संयमं बोधयति। एतत् अभिमानास्पदं खलु! चन्दमामां पठित्वा मम मनः स्वस्थं विद्यते।

यथा क्षुधार्ते अन्नं तथा ज्ञानार्थिने चन्दमामा। ज्ञानार्जनाय मार्गद्वयमेव - वाचनं प्रवासः च।

धनस्य अभावात् अहं प्रवासं कर्तुम् असमर्थः आसम्। तदा चन्दमामायां मया चित्रितं विश्वं दृष्टं तत्रत्याः कथाः मां प्रेरितवत्यः । विवेकबुद्धिः, आत्मसंयमः , संकल्पशक्तिः च मया चन्दमामातः एव प्राप्ताः। सद्यः जानेवारीमासस्य सञ्चिका मह्यम् अतीव अरोचत।

त्रिंशत् वर्षेभ्यः अनन्तरमपि अहं चन्दमामा-कथापुस्तकं पठामि। मम बालकेभ्यः अपि तत् अतीव रोचते। आङ्ग्लमाध्यमिकीं शालां गच्छन्तः अपि ते कन्नडचन्दमामां पठन्ति। तेनैव आङ्ग्लतः कन्नडभाषायां, कन्नडतः आङ्ग्लभाषायां, हिन्दीतः आङ्ग्लभाषायां, कन्नडभाषायां च अनुवादं कर्तुं ते समर्थाः अभवन्। मम सुखदाः स्मृतीः चन्दमामायां प्रकाशिताः कुर्वन्तु इति अहं प्रार्थये।

## मम स्मृतयः - मराठी

'चन्दमामा पठनस्य सुसंस्कारं' मम पिता अस्मासु समारोपितवान् । मम पिता ग्रामान्तरे कार्यं करोति स्म। चतस्रः अपि वयं भगिन्यः प्रतिशनिवासरं तस्य आगमनस्य प्रतीक्षां कुर्मः स्म। विशेषतः मासस्य प्रथमे शनिवासरे। तस्मिन् दिने वयं चन्दमामायाः 'मराठी' संस्करणं प्राप्नुमः स्म। 'का प्रथमं चन्दमामां पठिष्यति' इति अस्मासु स्पर्धा भवति स्म। क्वचित् पितुः गमनात् प्रागेव सर्वाः प्रतयः विक्रीताः भवन्ति स्म। तदा आमासं वयम् अस्वस्थताम् अनुभवामः स्म।


Name: Neelam Pandit, Occ: Teacher, Warje, Pune, Maharashtra.

मम पिता अतीव चिन्तनपूर्वकं वार्षिकप्रतीनां बन्धनं कारितवान्। तेन ३० वर्षाणि यावत् पुनः पुनः वयं ताः एव सञ्चिकाः पठितुम् अशक्नुम।

अन्ततः सर्वाणि पर्णानि जीर्णानि त्याज्यानि जातानि। मन्ये अस्माकं शैशवमपि तेन सह नष्टम्।

अस्माकं अग्रिमा सन्ततिः अपि चन्दमामापठने रूचिं दर्शयति। मम एका भगिनी व्यवस्थापकीया प्राध्यापिका वर्तते। सा पाठने 'विक्रम-वेताल' कथानाम् उपयोगं करोति, तासां कथानां पठनेन तस्याः तर्कबुद्धिः विकसिता इति सा मन्यते।

मम काचित् सखी सम्यक् अकथयत्, यत् 'चन्दमामा' अस्मान् नीतिगुणान् अपाठयत्।

अनुगृहीताः स्मः वयं चन्दमामापरिवारेण!

## विक्रमः वेतालश्च

# नास्तिकः

**धीरः** दृढनिश्चयः राजा विक्रमः यथापूर्वं वृक्षं प्रत्यागच्छत्। सः पुनः प्रेतम् अधः आनीय स्वस्कन्धे च संस्थाप्य यथापूर्वं श्मशानं प्रति मौनेन प्राचलत्। तदा प्रेतस्थः पिशाचोऽवदत् "भोः राजन्! ममाश्चर्यो भवति यत् भवान् कस्मादिदम् अतिदुष्करं कर्म आचरति। भवान् यस्मिन् विश्वसति स एव भवन्तम् अस्मिन् कर्मणि नियोजयति इति मन्ये। किन्तु विश्वासो न शाश्वतिकः। यः कालानुगुणं सन्दर्भानुगुणं च स्वचिन्तनानि परिवर्तयति स एव लोके भाविसमाजस्य कृते आदर्शः भवति। अस्य परिणामः शुभः अशुभः वा भवेत्। सन्दर्भमनुसृत्य स्वचिन्तनानि परिवर्तितवतः कस्यचन राज्ञः कथामहं श्रावयामि। तां सावधानमनसा शृणु, तया तव कार्यभारात् चेतसः ईषदुपशमोऽपि भवेत्।

अथ कदाचित् महाराजः चन्द्रगुप्तः



कोसलराज्यं पालयति स्म। कोसलराज्यं न केवलं विस्तृतम्, अपि तु धनसमृद्धमपि आसीत्। तद्राज्यं पूर्णतया नैसर्गिकवृष्ट्याधारितम्, तथा राज्यस्थाः सर्वेऽपि परिश्रमशीलाः आसन्। एतेनैव तद्राज्यस्य विकासः समभवत्।

यदा एकं राज्यं तत्रत्यानां परिश्रमेण सुसम्पन्नं भवति, तदा सहजतयैव प्रतिवेशिराज्यानाम् अवधानं तत्रैव आकर्षति। एवं तत्र प्रतिवेशिराजानः शत्रवोऽपि भवन्ति।

तेनैव कारणेन कोसलराज्यं राज्यरक्षणाय सुशिक्षितसेनां सर्वदा निर्वहति स्म। रक्षकदले प्रवेष्टुं तत्रत्याः युवानः सर्वदा प्रेरिताः भवन्ति। अत एव सा सेना शक्तिमद्भिः दृढैः युवकैः सम्पन्ना भवति। अपि च कठिनतमप्रशिक्षणेन ते सैनिकाः समर्थाः, शक्तिमन्तः, निपुणाश्च समभवन्।

कोसलराज्यस्य सैनिकबलं ज्ञात्वैव न कोऽपि शत्रुः तं राज्यम् आक्रान्तुं साहसं प्रदर्शयति। अत एव सम्प्रति बहुभ्यः वर्षेभ्यः कोसलराज्यं कस्मिन् अपि युद्धे भागं न अवहत्।

बहूनि दिनान्येवमेव सुखेन व्यतीतानि। कदाचित् राज्ञः गूढचारिणः वार्तामेकाम् आनीतवन्तः सा वार्ता सम्पूर्णराज्यमेव अकम्पयत्।

वार्तायाः सारस्तावत् 'विजयवर्धनः नाम राजा सम्पूर्णहिन्दूस्थानं स्वाधीनं कर्तुं सर्वत्र जैत्रयात्रां निर्वहति। सः क्रमशः एकैकं राज्यम् आक्रमन् अस्ति। सम्प्रति उपकोसलराज्यं समागतवान्। एतावत्पर्यन्तं तेन सर्वेऽपि राजानः युद्धे पराजिताः। अन्ये केचन आत्मानं तस्मै समर्पितवन्तः। न कोऽपि राजा एतावत्पर्यन्तं तम् जितवान्' इति।

वार्तामिमां श्रुत्वा राज्यस्थाः सर्वे सावधानाः अभवन् युद्धस्य सन्नद्धतां समारब्धवन्तः च।

प्रधानमन्त्री महादेवः सैन्याध्यक्षं वीरभद्रम् आहूय तमवदत् ''युद्धे अस्माकं प्रधानबलं तावत् सैनिकाः एव। तेषु देशभक्तिप्रवर्धनाय अस्माभिः ते प्रेरणीयाः, येन ते दृढमनस्काः भूत्वा शत्रून् मारयिष्यन्ति। युद्धक्षेत्रे तेषां लक्ष्यं तावत् विजयः वीरस्वर्गो वा स्यात्। तथा इमे प्रेरणीयाः'' इति।

''प्रधानामात्यवर्य! देशभक्तिदृष्ट्या तु अस्माकं सैनिकैः समं युद्धे कोऽपि प्रत्यर्थी न विद्यते। किन्तु कतिचनकारणैः अस्मत्सैनिकेषु भीरुता वरीवृद्ध्यते'' इति वीरभद्रः प्रत्युत्तरमदात्।

प्रधानमन्त्री एतत् श्रुत्वा निर्विण्णोऽभूत्। एतादृशयुद्धवातावरणे अयं भावः महान्तं प्रमादं संसूचयति। प्रधानामात्यः ''वीरभद्र! किमर्थम् एवं वदसि?'' इति तमपृच्छत्। ''युद्धे सैन्यं नाम अस्माभिः नीयमानम् आयुधसदृशं केवलम् एकं लघु साधनं न भवति। युद्धे ते सर्वदा अतितीक्ष्णविषयानपि सम्मुखीकर्तुं सन्नद्धाः स्युः। अस्यां परिस्थितौ त्वं किम् एतादृशीं दुरवस्थां कथयसि?'' इति अपृच्छत्।

''क्षम्यताम् अमात्यवर्य! भीरुता इति पदं मया प्रयुक्तम्। प्रस्तुतस्थितिं विशदीकर्तुं ततोऽपि अन्यत्पदं न स्मर्यते। विजयवर्धनः सर्वान् राज्ञः पराजित्य विजययात्राम् अनुवर्तयति इति वार्ता अस्मत्सैनिकानां मनस्सु मृत्युशङ्कां जनयतीति अहं शङ्के। ममाभिप्रायः इमे युद्धकारणात् भीताः, आत्मानं शत्रुभ्यः सुलभतया आत्मसमर्पणं करिष्यन्तीति न'' इत्यवदत् वीरभद्रः।

''तत्सत्यमेव स्यात्। अस्माभिः शत्रवः रणक्षेत्रे जेतव्याः इत्युक्ते आदौ अस्माकं मनस्सु ते जेतव्याः। तदैव वयं तान् जेतुं प्रभवामः। यदि वयं अस्माकं मनस्सु एव अशक्ताः भवेम, तर्हि कदापि तान् जेतुं न प्रभवामः एव'' इति महादेवः अवदत्।





''तदहम् अङ्गीकरोमि अमात्यवर्य, अत एव सेनासमूहेषु मनस्स्थैर्यं वर्धयितुं वयं मानसिकसिद्धतां कारयाम एव। अचिरादेव अहं शुभवार्तामानेष्यामि'' इत्युक्त्वा वीरभद्रः ततः निर्गतवान्।

सैन्याध्यक्षः वीरभद्रः सप्ताहानन्तरं प्रधानामात्यं पुनः अमिलत्।

''वीरभद्र! किं जातम्? भवतः प्रयत्नाः कियता प्रमाणेन सफलाः?'' महादेवः तमपृच्छत्।

''प्रधानामात्य! अस्मद्योजनानुगुणं सर्वेऽपि यत्नाः सफलाः सञ्जाताः'' इति वीरभद्रः हर्षनिर्भरः सानन्दं प्रत्यब्रवीत्।

''शोभनं, कथमेतद्भवता साधितम्?'' वीरभद्रस्य योजनां जिज्ञासुः महादेवः सकुतूहलं पृष्टवान्।

''अमात्यवर्य! भवान् जानात्येव पताकायाः उपरि हनुमतः चित्रं जयस्य सङ्केतकं भवतीति। तच्चित्रधारणेन अवश्यं विजयो भविष्यति। महाभारते अर्जुनः तां पताकां धृत्वा एव विजयम् आप्तवान् इति ज्योतिषिकः अश्वनाथवर्यः अवदत् इति अस्माकं सैन्ये अहं सर्वत्र प्रसारितवान्। परिणामतः अधुना अस्माकं सैनिकाः तां पताकां धृत्वा द्विगुणीकृतेन उत्साहेन स्वयुद्धकौशलम् अभिवर्धयन्तः सन्ति। अस्मत्सैनिकाः शत्रून् योद्धुं सन्नद्धाः वर्तन्ते। किन्तुः..'' संशयमुखेन अवदत् वीरभद्रः।

''किन्तु...?'' महादेवः तमपृच्छत् असहनताम् सूचयन्।

वीरभद्रः ''सैनिकानाम् अपेक्षितमानसिकपरिवर्तनसाधने अहं सफलः अभवम्। किन्तु अहं कियान् अल्पदृष्टिमान् इति अनन्तरमेव ज्ञातवान्'' इत्युक्तवान्।

''किं जातम्?'' व्याकुलमनस्कः महादेवः अपृच्छत्।

''अहम् अस्माकं राज्ञः प्रतिक्रियायाः बिभेमि। अस्माकं राजा नास्तिकः। सः धार्मिकचिह्नानि युद्धक्षेत्रे धर्तुं कदाचित् नाङ्गीकुर्यात् इति अहं चिन्तामग्नः अस्मि'' इति वीरभद्रः अवदत्।

वीरभद्रः किं सूचयतीति महादेवः

अभिज्ञातवान्। महाराजः चन्द्रगुप्तः नास्तिकः। तस्य वादस्तावत् 'अदृष्टे कस्मिंश्चित् विश्वासस्य स्थाने आत्मनः शक्तौ विश्वसिमः चेत् वयमितोऽपि शक्तिमन्तः भवेम' इति।

यद्यपि प्रशासनिककार्येषु सर्वत्र तस्य विश्वासाः आद्रियन्ते, तथापि अमुं भावं प्रजासु आरोपयितुं तु चन्द्रगुप्तः न यतते।

"हा... हन्त! अधुना वयं सङ्कटस्थितौ स्मः। भवतु, यद्भवितव्यं तद्भविष्यति। सर्वमपि भगवदिच्छानुसारं भविष्यति। अस्माकं प्रभुः सद्गुणसम्पन्नः चन्द्रगुप्तः नास्तिकः सर्वानपि मनुते किन्तु दैवे तु तस्य विपरीता मतिः। भवान् गच्छतु। भवतः यत्कर्तव्यं तन्निर्वहतु। तदतिरिक्तं भगवतः इच्छा।"

अचिरादेव राज्ञः गूढचारिभ्यः 'राजा विजयवर्धनः वेगेन कोसलराज्यम् उपागच्छति' इति सन्देशः प्राप्तः।

राजा चन्द्रगुप्तः उपवेशनार्थं सर्वान् अमात्यान् मन्त्रशालां समाहूतवान्। तेन कश्चन व्यूहः आरचितः। कोसलराज्यस्य सीमासु शत्रुराज्यसैन्यं नियन्त्रयितुं कोसलराज्यसैन्यं संसिद्धं वर्तते। ते सर्वेऽपि सीम्नि आक्रमणं कुर्वन्ति। तत्रैव शत्रून् पराजेष्यन्ति, तेन तेषां पादस्थापनमपि कोसलराज्ये न भविष्यति।

राजा चन्द्रगुप्तः वीरभद्रम् आज्ञापितवान् "सैन्यं युद्धाय सिद्धं करोतु" इति।

राज्ञः वचनं श्रुत्वैव अमात्यः 'विलम्बः



नैव कर्तव्यः' इति मत्वा झटिति उत्थाय राज्ञे वास्तविकपरिस्थितिं, सैनिकान् सन्नद्धीकर्तुं हनुमतः चित्रस्य प्रयोगः इत्यादिकर्तुं न्यवेदयत्।

राजा चन्द्रगुप्तः अमात्यस्य कथनं शान्ततया श्रुतवान्। तत्पश्चात् बहु समयं मौनमतिष्ठच्च। समावेशे समागतानां सर्वेषाम् उत्सुकता वर्तते यत् 'सन्दर्भेऽस्मिन् राज्ञः कः निर्णयः भवेत्' इति।

किञ्चित्कालमौनानन्तरं राजा चन्द्रगुप्तः 'निर्णयः स्वीकृतः' इति शिरः चालितवान्। तदनु सः वीरभद्रं युद्धक्षेत्रे सैनिकैः हनुमतः चित्रयुक्तपतायाः नयनम् अनुमतम् इति अकथयत्।"

एवं कथां श्रावयित्वा प्रेतस्थः पिशाचः वेतालम् अपृच्छत् ''भोः राजन्! राजा स्वशक्तावेव विश्वसिति। नास्तिकः चन्द्रगुप्तः एवं कथं स्वमतं परिवर्तितवान्? किमयमपि प्रच्छन्ननास्तिकः? यः यावत्पर्यन्तं सर्वं सुखं भवति तावत्पर्यन्तं देवः नास्तीति उक्त्वा यदा कष्टं भवति तदा देवं शरणं गच्छति तादृशः किम् अयम्? अन्यथा किमयं मनसा भीरुः बहिस्तावत् धीरः इव, नास्तिकः इव च नटनं करोति? राजन्! मम एतेषां प्रश्नानाम् उत्तराणि यदि ज्ञात्वापि न वदसि तर्हि तव शिरः सहस्रधा भग्नं भविष्यति'' इति।

तच्छ्रुत्वा राजा विक्रमः ''चन्द्रगुप्तः न भीरुः, न वा असमर्थः। देवस्य अपेक्षया स्वशक्तौ तस्य अतीव विश्वासो वर्तते। तथैव सः प्रजानां मतम् आद्रियते। स्वकीयमतानि प्रजासु आरोपयितुं न प्रयतते। देवः नास्तीति चिन्तनं पूर्णतया स्वव्यक्तिगतम् इति सः स्पष्टं जानाति। अतः तेन सैनिकानां श्रद्धा अनुमता इत्यत्र महदाश्चर्यं किमपि नास्ति। युद्धं तु स्वव्यक्तिगतं नास्ति। तत्तु सम्पूर्णराज्यस्य तत्रत्यप्रजानां च सम्बद्धः विषयः वर्तते। सैनिकानां श्रद्धायाः अनुमोदनेन सः स्वकीयव्यक्तिभावनां परित्यज्य आदर्शपूर्णव्यक्तित्वम् प्रादर्शयत्। यदि सैनिकाः 'नास्तिकः राजा अपि अस्मन्निमित्तं देवं मनुते' इति चिन्तयन्ति तर्हि स्वाभाविकतया एव तेषां विश्वासो वर्धते। प्रेरितानाम् उत्साहिनां च सैनिकानां कारणेन राजा विजयं प्राप्तवान् इत्येषः अतिशयोक्तेः विषयः न भवति'' इति उक्तवान्।

विक्रमः यावत् मौनं परित्यज्य वेतालस्य प्रश्नान् समादधत् तावत्, विक्रमात् साधु समाधानानि प्राप्य प्रेतस्थः वेतालः सप्रेतं उड्डीय पुनः वृक्षमारूढवान्।

***- पी. वेंकटेश्वरराव:***





# मत्स्यकृषि:

कैरोनगरे राघव: नाम कोऽपि प्रसिद्ध: उत्साहवान् पुरुष: वसति स्म। अकस्मात् तस्य कृषिकार्ये रुचि: अजायत। अत: स: निखिलं प्राङ्गणम् अखनत्, नानाविधान् वृक्षकान् च अरोपयत्। सावधानमनसा स: तान् संवर्धयते स्म।

यदा तस्य मित्राणि ज्ञातवन्त:, यत् राघव: कृषिकार्ये अतीव उत्साहं वहति तदा कानिचन मित्राणि कृषिकार्यविषये तम् उपादिशन्, कानिचन मित्राणि तस्य भृशं साहाय्यम् अकुर्वन्। एवं कानिचन दिनानि व्यतीतानि। अहो आश्चर्यम्! राघवस्य वाटिकायां सुन्दरानि पुष्पाणि विकसन्ति स्म।

एकदा कोऽपि धनाढ्य: राघवेन सह मेलितुम् आगच्छत्। तदानीं राघव: स्ववाटिकायाम् आसीत्।

''महान् पुष्पकृषक: जात: भवान् इति श्रुतवान् अहम्। परन्तु भवत: उपवने कोऽपि नूतन: बालतरु: कथं नास्ति?'' इति स: धनिक: अपृच्छत्।

''यानि यानि बीजानि प्राप्तवान् अहं तान्यैव मया रोपितानि। अत: न कोऽपि मम प्रमाद: यदि कोऽपि नूतन: बालतरु: नास्ति'' इति राघव: प्रत्यवदत्।

''नूतनानि बीजानि तु दातुम् इच्छामि किन्तु मम मनसि सन्देह: अस्ति यत् भवान् तानि संवर्धितुं समर्थ: अस्ति वा?'' धनवान् अवदत्।

तदा राघव: सविश्वासम् अकथयत् ''अलं शङ्कया। प्रत्येकं बीजं संवर्धयितुं शक्नोमि अहम्।''

---

**वाय्. आदिनारायण:**



"अस्तु। तर्हि श्वः प्रभाते मम भृत्यद्वारा बीजानि प्रेषयामि। मम जामात्रा बगदादतः तानि बीजानि प्रेषितानि। कृषिकार्ये मम रुचिः नास्ति। अतः मया तानि बीजानि कर्गजेन वेष्टितानि" इति सः विभवसम्पन्नः अगदत्।

अग्रिमे दिने प्रातःकाले धनिकस्य सेवकः राघवाय कर्गजस्य लघुवेष्टनं दत्त्वा कथितवान्, "भवते एतद् दातुं स्वामिना आदिष्टोऽहम्। तेन कथितम्, सावधानतया संवर्धनीयं भवता" इति।

कर्गजवेष्टनम् उद्घाट्य राघवः अपृच्छत् "एतानि बीजानि कानि इति तव स्वामिना न कथितं किम्?"

"किं भवानपि न जानाति केषां वृक्षाणां सस्यानां वा एतानि इति? यदा एते संवर्धन्ते, तदा सः आगत्य द्रक्ष्यति" इति उक्त्वा भृत्यः अगच्छत्। ये कृषिकार्यं कुर्वन्ति ते यदा बीजानां विषये न जानन्ति तदा ते तेषां स्वादमनुभवन्ति। राघवः अपि तथैव कृतवान् धनिकस्य कुटिलतां च ज्ञातवान्।

तानि बीजानि नासन् अपि तु शुष्कीभूतानि मत्स्यबीजाण्डानि आसन्। राघवस्य परिहासार्थं तेन धनिकेन एवं कृतम् आसीत्। राघवेण चिन्तितम् 'शठं प्रति शाठ्यम् एव युक्तम् तथैव करणीयम्' इति।

द्वौ सप्ताहौ अतीतौ। एकदा राघवः विपणीं गतवान्। तत्र तस्य पुरतः सहसा आगच्छन् धनिकः तं पृष्टवान्, "किं पाटलपुष्पाणि (जपापुष्पाणि) सम्यक् सन्ति खलु?"

"भवतः कृपाप्रसादात् इदानीं तु पाटलपुष्पाणि एतावन्ति विकसितानि यत् तेषां पर्णान्यपि द्रष्टुं न कोऽपि शक्तः" इति राघवः प्रत्यवदत्।

"यानि बीजानि मया प्रेषितानि तानि त्वया उप्तानि किम्?" धनिकः अपृच्छत्।

"तदानीमेव उप्तानि" इति राघवः प्रत्युदतरत्।

"प्रायः तानि न वर्धितानि स्युः मम जामात्रा कथितमेव यत् कोऽपि सामान्यमालाकारः तानि संवर्धयितुं समर्थः नास्ति।" पुनरपि उक्तवान् धनिकः।

"एवं न। मया तेषां कृते क्षेत्रे विभागान् कृत्वा खादं क्षिप्तम्। भवता प्रेषितेभ्य: बीजेभ्य: अङ्कुरा: इदानीम् उपरि उपरि आगच्छन्त: सन्ति। तेषामुपरि कस्यापि दृष्टि: सूर्यकिरणा: च न पतेयु: अत: मया ते आच्छदिता:। श्व: मम गृहं कृपया आगच्छतु तदा तान् दर्शयाम्यहम्।"

"निश्चयेन आगच्छामि श्व:" इति उक्त्वा धनिक: निजमार्गेण गत:।

राघव: तदनन्तरं मत्स्यापणं गत्वा लघुमीनान् क्रीत्वा गृहं गतवान्। स: स्वपुत्रम् आहूय अवदत् "पुत्र, मत्स्यान् गृहीत्वा क्षेत्रे एवं निक्षिप येन केवलं तेषां मुखानि एव दृष्टिगोचराणि भवेयु:। तान् सर्वान् करण्डै: आच्छादय" इति।

राघवपुत्रेण तथैव आचरितम्। अग्रिमे दिने प्रभाते धनाढ्य: आगत:। राघव: तेन सह क्षेत्रम् आगतवान्। करण्डान् दर्शयित्वा अकथयत्-"लघुतरव: करण्डानाम् अध: सन्ति। स: एकं करण्डं उद्घाट्य दर्शितवान्। धनिक: भूमित: उपरि आगच्छन्तं इव एकं झषम् अपश्यत्। यदा राघव: सर्वान् करण्डान् उद्घाट्य मत्स्यान् अदर्शयत् तदा धनिक: विस्मयाकुल: अभवत्।

"अहो आश्चर्यम्! ह्य: मया त्वयि विश्वास: न कृत:। अद्य स्वयमेव दृष्टम्। अत: विश्वास: करणीय: एव। एतानां बीजानां संवर्धनं कठिनम् इति मन्ये। यदि मम समीपे बृहद् क्षेत्रं भवेत् तर्हि अहम् एतेषां संवर्धनं कर्तुं शक्ष्यामि। मयापि एवमेव कृषिकार्यं करणीयम्" इति धनिक: अवदत्। स: गृहम् आगत्य कृषकेभ्य: अकथयत्-"रे, अस्मिन् वर्षे क्षेत्रेषु शुष्कीभूतानि मत्स्यबीजाण्डानि रोपयन्तु।" कृषीवला: तथैव अकुर्वन्।

राघव: एतां वार्तां नगरे सर्वत्र प्रसारितवान्। सर्वे पौरजना: धनिकं दृष्ट्वा हसन्ति स्म। तदा राघवं प्रति कुटिलतया आचरितवान् धनिक: पश्चात्खेदम् अन्वभवत्।





# अनन्तस्य औद्धत्यम्

बेलसोण्डा नामके नगरे एकः अनन्तनामा धनिकः कृषकः वसति स्म। बाल्यकालात् सः स्वपित्रा सह क्षेत्रे कृषिकार्यम् अकरोत्। एवं सःनिरीक्षणेन एव बहूनि कार्याणि पठित्वा युवावस्थायाम् एव कृषिकार्येषु नैकान् अनुभवान् प्राप्नोत्। परिणामतः कृष्यां कुशलः सः सहजतया कतिचन एकरपरिमिताम् भूमिम् स्वसम्पत्त्याम् योजयितुम् अशक्नोत्। तस्य कृषिभूम्याः किञ्चित्भागे सः फ़लोद्यानानि व्यकासयत्। अवशिष्टे भागे सः तण्डुलान्, द्विदलानि, शाकानि उत्पादितवान्। अधुना सः तस्मिन् ग्रामे एकः सफ़लःकृषकः इति ख्यातिम् अलभत। जनप्रशंसया सः अहंमन्यः अभवत्।

ग्रामे विद्यमानाः सर्वे कृषकाः रात्रिभोजनानन्तरम् ग्रामस्य मेलनस्थले सम्मिलन्ति स्म। ते सर्वेऽपि कृषकाः तेषां समस्याः ग्रामाधिकारिणे नरहरिप्रसादाय कथयन्ति स्म सः च तान् कृषकान् उपदिशति उपायान् च सूचयति स्म। एकदा रात्रौ यथासमयम् अनन्तः ग्रामस्य मेलनस्थलीम् आगतः। सः अपश्यत् यत् ग्रामाधिकरिणा सह अन्ये सर्वे कृषकाः एकस्य सुनन्दनाम्नः कृषकस्य सान्त्वनां कुर्वन्तः आसन्। किं प्रवृत्तम् इति ज्ञातुकामः अनन्तः व्यजानात् यत् सुनन्दस्य उत्पादनम् न्यूनमूल्येन क्रीत्वा सः केनापि वञ्चितः। तच्छ्रुत्वा अनन्तः संवेदनहीनतया अवदत्, यदि वयं चतुराः न भवेम अननुभविनः च यदि भवेम तर्हि कोऽपि अस्मान् सहजतया वञ्चयितुं शक्नुयात्। तस्य वचांसि शृण्वन्तः अन्ये कृषकाः अचिन्तयन् यत् अनन्तस्य ईदृशं भाषणम् अनुचितम् अस्ति इति।

ए. हेमवती

ग्रामाधिकारी नरहरिप्रसादः अनन्तम् अवोचत्, ''चातुर्यम् अनुभवश्च केवलं न पर्याप्तौ। कदाचित् बुद्धिमत्तमः जनः अपि केनापि वञ्चितः भवति। अनन्तः युक्तिवादम् कुर्वन् अवदत्, अहं भवता सह सहमतः। यदि वयं चतुराः भवेम तर्हि वयं कदापि वञ्चिताः न भवेम। अहं कदापि अस्माकं ग्रामयात्रायाम् न केनापि वञ्चितः। अनन्तस्य उपहासकारकैः वचोभिः व्यथितः सुनन्दः अवदत्, ''साधु! तर्हि किं त्वम् अतीव बुद्धिमान् असि इति तव कथनस्य तात्पर्यम्?''

अनन्तः सात्मविश्वासम् अवोचत्, ''आम् निश्चयेन! न वा कोऽपि माम् विवेकिनं कदापि अवञ्चयत् न वा वञ्चयिष्यति।''

ततः सुनन्दः अवदत्, यदि एतत् सिद्धं भविष्यति यत् त्वं केनापि वञ्चयितुं न शक्ष्यसे तर्हि अहम् तुभ्यं विंशतिः सहस्रं रुप्यकाणि दास्यामि। ''यदि त्वं वञ्चितः भविष्यसि तर्हि त्वं मह्यं किं दास्यसि?''

तयोः तत्सम्भाषणे व्यत्ययं जनयन् ग्रामाधिकारी नरहरिप्रसादः अवदत्, ''यथा अनन्तः आत्मविश्वासेन वदन्नस्ति तदनुगुणं यदि सः वञ्चितो न भविष्यति तर्हि सः सुनन्दाय चत्वारिंशत् सहस्रं रुप्यकाणि दास्यति । एषः समयः मासत्रयं यावत् एव वैधः भविष्यति। वयं सर्वे अस्य साक्षिणः स्मः। अनन्त! किं त्वया अयं समयः गृह्यते?''

अनन्तः उदतरत्, ''आम् निश्चयेन! अहं तु नैव वञ्चितः भविष्यामि। मम इयमेव चिन्ता



यत् सुनन्दः अकारणमेव तस्य विंशतिः सहस्रं रुप्यकाणि अपगमयिष्यति।''

सुनन्दः अतीव दयालुः जनः आसीत्। सामान्यतया जनाः अपक्वानि आम्रफ़लानि अवतारयन्ति, अनन्तरञ्च तानि कृत्रिमतया पक्वानि कारयन्ति ग्रामयात्रासु विक्रीणन्ते बहु धनञ्च अर्जयन्ति च। परं सुनन्दः तु तानि आम्रफ़लानि यावत् पक्वानि न भवन्ति तावत् ततः वृक्षेभ्यः न अवतारयति स्म। यः कोऽपि तानि आम्राणि क्रीणीयात् सः तेषाम् आम्राणां साधुतरम् आस्वादं गृह्णीयात् यतः ग्राहकाणां सन्तोषः एव तस्य कृते तेषाम् आशीर्वचांसि सन्ति इति। इदानीम् अपि सः फलानां पक्वतां सम्पाद्य ततः उत्तमधनलाभेच्छया दशशकटमितपक्वाम्राफलानिं ग्रामयात्रास्थलं



प्रति अनयत्।

यदा सः ग्रामयात्रास्थलं प्राप्नोत् तदा सः हरबचनम् अन्विष्यत्, यः सुनन्दात् सर्वाणि आम्राणि एकस्मिन्नेव समये क्रीणाति स्म परं दीर्घकालं यावदपि प्रतीक्षां कृत्वा हरबचनः न दृष्टः तदा सः लखनम् आम्राणि विक्रेतुं सिद्धः अभवत्। लखनः अत्यन्तम् धूर्तः जनः आसीत् सः सुनन्दम् अवोचत्, भोः सुनन्द! भवान् दिनत्रयं विलम्बेन आगतः अस्ति ग्रामयात्रां प्रति अतः अद्य मूल्यावनतिः अस्ति विपण्याम्। किं करवणि अहम्?

परं भवान् तु मम मित्रम् अस्ति अतः अहम् पूर्वोक्तस्य अपेक्षया प्रतिशतम् आम्राणां रुप्यकत्रयम् एतावन्न्यूनमूल्येन एतानि आम्राणि क्रीणामि। यदि श्वः पर्यन्तं भवान् प्रतीक्षितुम् इच्छति तर्हि यथा भवतः इच्छा। तत् निशम्य सुनन्दः अभाषत,अधुना इमानि आम्राणि सुपक्वानि जातानि अतः श्वः पर्यन्तम् कदाचित् इमानि नष्टानि भवेयुः अतः नयतु तेनैव मूल्येन तेन अहं गृहं तु अन्धकारात् पूर्वम् प्राप्तुं शक्नुयाम्। ततः सः दशशकटपरिमितानि तानि आम्राणि नियतमूल्यस्यापेक्षया न्यूनेन मूल्येन व्यक्रीणत अतीव दुःखी च सञ्जातः तस्यां रात्रौ तस्य श्यालः अमनकुमारः तस्य परिवारार्थं एक कण्डोलपरिमितानि आम्रफ़लानि आनीय सुनन्दस्य गृहम् आगतः।

सुनन्दः तानि आम्रफ़लानि दृष्ट्वा विस्मितोऽभवत्। तेन एतत् विज्ञातम् यत् तानि आम्रफ़लानि तस्यैव उद्यानस्य आसन्। अमनकुमारः वदन्नासीत्, प्रतिशतम् विंशतिः आम्राणि एतावता मूल्येन इमानि प्राप्तानि। सत्यमेव बहु न्यूनमूल्येन प्राप्तानि खलु?सुनन्दः व्यजानात् यत् सत्यमेव सः वञ्चितः आसीत् इति। सुनन्दः इमां घटनां ग्रामस्य मेलनस्थल्यां जनेभ्यः कथयन् आसीत्।

एकदा अनन्तः तस्य आच्छादितेन वृषभशकटेन गच्छति स्म। ग्रामाधिकारी नरहरीप्रसादः तम् मार्गे अमिलत्। सः अनन्तस्य पत्नीम् पुत्रान् च अपि शकटे अपश्यत् अनन्तम् अपृच्छत् च, "अनन्त! त्वं स्वपरिवारेण सह कुत्रापि गन्तुम् उद्युक्तः असि इति प्रतीयते। अनन्तः शकटम् अस्थगयत् अवदत् च, आम् महोदय! वयम् दशदिनार्थं ग्रामान्तरं गच्छन्तः स्मः।"

"परं भवतः गृहे तु नैकाः धान्यैः पूरिताः गोण्यः सन्ति किल? किं ताः सुरक्षिताः तिष्ठन्ति?" ग्रामाधिकारी अपृच्छत्।

"मयाः ताः सम्यक् स्थापिताः सन्ति चिन्ता न कार्या। मम कर्मचारिभिः गृहं परितः सुरक्षारक्षकाः नियोज्यन्ते। ममपालितशुनकाः अपि मम गृहं रक्षिष्यन्ति।"

"अरे! परं भवतः समीपे किञ्चित्धनम् अपि स्यात् खलु? अहं तु मन्ये महान् राशिः स्यात्। तद्विषये किमपि न चिन्तितं वा?" अनन्तः उदतरत्, "मया तदपि साधु स्थापितमस्ति। धनराशिभिर्युक्तं पात्रं देवगृहात् उन्नीय मया पाकगृहे पाकपात्रेषु एकस्मिन् संस्थापितम् वर्तते। कोऽपि स्तेनः तज्ज्ञातुं न शक्ष्यति।" दशदिनानन्तरं यदा सः अनन्तः सपरिवारं गृहं प्रत्यागतः तदा अनन्तस्य पाकगृहं लुण्ठितम् आसीत् । अनन्तः कयाचित् सङ्कट-आशङ्कया तस्य वस्तुरक्षाकण्डोलान् प्रति अयात् तदा ते रिक्ताः आसन् इति ज्ञात्वा दुःखी सः रुदन् ग्रामाधिकारिणं प्रति अगच्छत् अवदत् च सर्वं वृत्तान्तम्। सः अवदत्, "महाभाग! मया सर्वम् भवते निवेदितम् अस्ति। निश्चयेन मां त्रासयितुं सुनन्देनैव कृता इयं योजना अस्ति इति अहं मन्ये।"

नरहरीप्रसादः सर्वान् ग्रामवासिनः आहूय अवदत्, "अनन्तेन मह्यं सर्वं कथितम् अस्ति यत् कथं तेन भ्रातृगृहं प्रति गमनात् पूर्वम स्वधनं गोपितम् इति। किं चतुराः जनाः स्वक्लृप्तीः अन्यान् एवं वदेयुः? प्रायः भवतः गुप्तानि वचांसि कस्यचित् कर्मकरस्य श्रुतिपथम् आगतानि स्युः। कदाचित् अत्यन्तं चतुरः जनः अपि अन्येन वञ्चितः भवितुम् अर्हति। त्वं स्वयमेव स्वस्मै एतस्य उदाहरणम् असि। तव धनराशिः मत्गृहे सुरक्षितः अस्ति। गच्छ गृहाण च तम्। सुनन्दस्य विषये मा शङ्कस्व! अन्येषां विषये एवम् औपहासिकं न वक्तव्यम् विशेषतया तदा तु नैव यदा सः जनः पूर्वमेव विषण्णः स्यात्। व्रीडितः अनन्तः शिरः अवानमयत्।





# पञ्चतन्त्रकथा

**पू**र्वं दक्षिणदिशि स्थितस्य महिलारोप्य-नामकस्य नगरस्य समीपे आसीदेकं निबिडारण्यम्। तस्मिन् अरण्ये एकः विशालः वटवृक्षः अवर्तत। नैकविधाः खगाः तस्य वटवृक्षस्य फलानि खादन्ति स्म। नैके पान्थस्थाः तं वटवृक्षम् आश्रयन्ते स्म। तस्य शाखाः भूम्यां सुदूरं प्रसृताः आसन्। वृक्षस्य पर्णेषु नैकैः खगैः स्वनीडानि रचितानि आसन्। तस्य फलेषु नैकविधाः कीटकाः सम्प्राप्ताः। तस्य पुष्पेषु स्थितं मधु मक्षिकाः आस्वादयन्ति स्म।

तस्मिन् महावृक्षे लघुपतनकः नाम कश्चन काकः निवसति स्म। अथैकदा आहारम् अन्वेष्टुं सः महिलारोप्य-नगरीं प्रति प्रस्थितः। मार्गे सः एकं व्याधं दृष्टवान्। उग्ररूपः कृष्णवर्णीयः तथा क्रूरः आसीत् सः। तस्य हस्ते एकं जालम् आसीत्। तं दृष्ट्वा काकः व्यचिन्तयत् 'नूनम् अयं क्रूरः तमेव वृक्षं प्रति गच्छन् अस्ति यस्मिन् वृक्षे मम निवासः वर्तते। तत्र गत्वा सत्यमेवायं सर्वान् खगान् स्व-जाले बध्नीयात्। न जाने का वा गतिः स्यात् तेषां खगानाम्! सर्वेषां मम बान्धवानां रक्षणं मम दायित्वमेवास्ति। मया ते रक्षणीयाः एव।'

इत्थं विचिन्त्य काकः स्वनिवासं प्रत्यागतवान्। वृक्षं प्रत्यागतेन तेन सर्वेषां पक्षिणां मनसि जागरूकता निर्मिता। सः उवाच "कश्चन व्याधः हस्ते जालं तण्डुलान् च गृहीत्वा अस्माकं निवासं प्रत्येव आयाति। भवन्तः सर्वे तस्मिन् जाले मा पतन्तु। सः भूमौ जालं प्रसार्य तण्डुलान् प्रक्षिपेत्। विषसदृशाः ते अन्नकणाः भवद्भिः न खादनीयाः।"

मित्रसम्प्राप्तिः - १



व्याधेन जलाशयस्य समीपम् आगत्य जालं प्रसारितं तण्डुलाः च प्रक्षिप्ताः। ततः किञ्चित् दूरं गत्वा कस्यचित् वृक्षस्य पृष्ठतः आत्मानं गोपयित्वा प्रतीक्षमाणः सन् तत्र अतिष्ठत्। काकः तु पूर्वमेव अन्यान् खगान् सूचितवान् आसीत् अतः सर्वेऽपि पक्षिणः गुप्तरूपेण दूरे एव आसन्।

किन्तु केनचित् कालेन चित्रग्रीवः नाम कपोतराजः स्वस्य सहस्र-अनुचरैः सह आहारान्वेषणाय तत्र सम्प्राप्तः। दूरादेव तैः अन्नकणाः दृष्टाः। सर्वेऽपि कपोताः यत्र अन्नकणाः प्रसृताः आसन् तस्मिन् दिशिः उड्डीयमानाः आगच्छन्। काकः सङ्कटात् तान् त्रातुम् उच्चैः आक्रोशत् परं न तस्य कोऽपि लाभः। अन्नकणान् दृष्ट्वा लोभाविष्टाः सर्वेऽपि कपोताः भूमौ उपविष्टाः जाले बद्धाः च सञ्जाताः। अज्ञानतिमिरे स्थित्वा जिह्वालौल्येन प्रभाविताः जनाः जाले पतिताः मीनाः इव कालकवलीभवन्ति। एतत्तु स्वाभाविकम् एव। अतः कपोताः अत्र नैव दोषास्पदाः। मानवमनसि उत्पन्नं प्रलोभनं तु सहजसुलभम्। अन्यथा रावणसदृशः ईश्वरभक्तः किं न जानाति स्म यत् परकीया स्त्री न कदापि अपहरणीया । तत् महत्पापम् एव। तथा ईशः रामः अपि सुवर्णमृगस्य मायाजालं कथं न अभिज्ञातवान्? धर्मात्मा युधिष्ठिरः द्युतक्रीडायाम् अकस्मात् सर्वस्वं कथं वा पणीकृतवान्? एतैः पौराणिक-कथानाम् उदाहरणैः एतदेव स्पष्टं भवति यत् किमपि अस्माकं मनः आकर्षति तस्मिन् किमपि सङ्कटं गूढरूपेण तिष्ठति। किन्तु अस्माकं मनः तत् सङ्कटं विज्ञातुं न शक्नोति। तथा च सङ्कटं सम्मुखीकर्तव्यम् इति यदि विधिना एव लिखितं तर्हि सङ्कटसमये मानवस्य बुद्धिः भ्रश्यति। तदा मनुष्यः स्वमेधां नियन्त्रितुं न शक्नोति।

एतावत्तु व्याधः अपि ज्ञातवान् यत् सर्वे कपोताः जाले बद्धाः इति। आनन्दस्य परमसीमाम् एव प्राप्तः सः जालसमीपं गतवान्।

चित्रग्रीवेणापि ज्ञातं यत् सानुचरः सः व्याधस्य जाले बद्धः इति। तदा सः स्वानुचरान् उक्तवान्, "भवद्भिः न भेतव्यम्। यः व्यसने धैर्यवान् भवति स एव सङ्कटं सम्मुखीकर्तुं शक्नोति। तस्मात् सङ्कटात् च आत्मानं त्रायते

सः। यावत् सः दुष्टः व्याधः अत्रायाति तस्मात् पूर्वमेव वयं सर्वे मिलित्वा जालेन सहैव तस्य दृष्टिपुरतः एव इतः उड्डयामः। एवं कृते सत्येव वयम् आत्मानं रक्षितुं शक्नुमः अन्यथा यदि अस्मासु प्रत्येकं खगः भिन्नदिशं प्रति गन्तुं प्रयतते तर्हि भारण्डः इव वयं सङ्कटे पतिष्यामः। अतः एकाग्रमनसा मम वचनानि श्रुण्वन्तु'' इति।

**द्विमुखस्य: पक्षिण: कथा**

**आ**सीत् पुरा कश्चित् खगः यस्य द्वे मस्तके आस्ताम्। तस्य द्वेऽपि मस्तके परस्परविभिन्नदिशि अवर्तेताम्। अथैकदा तस्य खगस्य एकेन मुखेन अमृतं प्राप्तम् तदा द्वितीयं मुखम् अपि तत् अमृतम् अयाचत। किन्तु प्रथमेन मुखेन तत् नाङ्गीकृतम्। तदा द्वितीयेन मुखेन कुतश्चित् विषं प्राप्य तद् खादितम्। विषस्य प्रभावेण पक्षी द्वाभ्यां मुखाभ्यां सह मृत्युपन्थानं प्राप्तः।

कपोतानां राजा चित्रग्रीवः इत्थं कथां श्रावितवान्। तां कथां श्रुत्वा सर्वेऽपि कपोताः एकत्र एव उड्डीय ततः शीघ्रं पलायिताः।

व्याधः तान् कपोतान् दृष्ट्वा भूमौ एव तेषां पृष्ठतः धावन् अचिन्तयत् 'एते पक्षिणः नूनं परस्परैः सह कलहं करिष्यन्ति। तदा मम जालेन सह स्वयमेव अधः आगमिष्यन्ति' इति।

लघुपतनकः अपि अधुना आहारान्वेषणं त्यक्त्वा जाले बद्धानाम् अनुचराणां पृष्ठतः उड्डयन् गतः।

अचिरमेव सर्वेऽपि कपोताः जालेन सह एतावत् दूरं गताः यत् व्याधः तु तान् द्रष्टुमेव न शक्तः। स्वस्य पश्यतः एव नष्टान् कपोतान् ज्ञात्वा निराशः व्याधः अचिन्तयत् 'यत् विधिलिखितं तद् विनायासं भविष्यति एव। मम कुटुम्बस्य पोषणस्य आधारः तद् जालम् अपि विनष्टम्।' इति विचिन्त्य सः गृहं प्रत्यागतः। *(अनुवर्तते)*





# नरकः स्वर्गः च

एकदा कौमुदीराज्यस्य राजा रविवर्मा कयाचित् अननुभूतपूर्वया विलक्षणया चिन्तया ग्रस्तः। तस्य चिन्ता आसीत् यत् मरणानन्तरं सः स्वर्गं प्राप्स्यति अथवा नरकम्। सा शङ्का तं राजानं प्रतिक्षणं पीडयितुम् आरभत अतीव व्याकुलम् अकरोत् च।

तेन सर्वे मन्त्रिणः राजकीयाः पण्डिताः आहूताः आकस्मिकी सभा च आयोजिता। सः सभां प्रति अवदत्, "अहं प्रजासुखे मम सुखम् अन्विष्यामि तथापि सर्वदा चिन्ताग्रस्तः भवामि यत् अनवधानेन किं मया अयोग्यम् आचरितम्! अहं जानामि यद् करसङ्ग्रहे कठोरः अस्मि। तेन विना राज्यपालनार्थं धनस्रोतः अन्यं किमपि नास्ति। किन्तु केभ्योऽपि बलेन न किमपि गृह्णामि। किं युष्माकं मतम्? कृपया सर्वेऽपि कथयत स्वैरं स्वैरम्!"

सर्वैः चिन्ता अनुभूता। अमात्यः वर्धनः प्रथमम् उक्तवान्, "महाराज, भवतः शासनकाले प्रजाजनाः सुखेन आनन्देन च निवसन्ति, न कोऽपि दुःखलेशमपि अनुभवति इति तु सर्वे जानन्ति एव। एतेन सिद्धं भवति यद् भवतः शासनम् उत्कृष्टमिति। भवान् कुशलः शासकः इति। कृपया वयं भवतः चिन्ताविषयं ज्ञातुम् इच्छामः। किम् अस्ति भवतः मनसि? वयं यथाशक्ति समस्यां निराकर्तुं प्रयतामहे, येन भवतः स्वास्थ्यलाभः भवेत्।"

राजा रविवर्मा क्षणमात्रं सभायां सर्वत्र दृष्टिं प्रसारितवान्। ततः तेन मनसि स्थिता चिन्ता प्रकटीकृता। सः अवदत्, "अहं एकया चिन्तया पीडितोऽस्मि। मरणोत्तरं स्वर्गं प्राप्स्यामि उत

जी.प्रियारानी



नरकम् इति शङ्का मां पीडयति व्याकुलं करोति च।'' सर्वजना: राज्ञ: वचनं श्रुत्वा हतबुद्धय: एव अवाक् च सञ्जाता:। मन्त्रिण: प्राज्ञा: राजानं स्वर्गगमनम् अधिकृत्य नैकै: प्रमाणै: आश्वासितवन्त: तेषां वचनं नृपं रविवर्माणम् अक्रोधयत्, ''कथम् एवं विश्वासेन यूयं कथयथ? यथा श्रेष्ठा: जना: अपि दुर्बलक्षणे अयुक्तं कर्तुम् अर्हन्ति। देवस्य रोषपात्राणि च भवन्ति। यदि मम भाग्ये नरक: लिखित: स्यात् तर्हि युक्तानि कर्माणि उपदिशन्तु। यूयं सर्वे प्राज्ञा: अधीतशास्त्रा: विदितलोकव्यवहारा: अत्र मम आस्थानं समागता:, कृपया युष्मासु सविस्तरं चर्चां कृत्वा मम समस्याया: अत्यन्ततो निराकरणं कुरुत।''

दिनत्रयानन्तरं कश्चन बटु: मृद्भाण्डं स्कन्धे धारयन् राजसभां प्राविशत्। बटु: राजानं रविवर्माणं प्रति अगच्छत् सावधानतया भाण्डम् अध: स्थापयित्वा राजानम् उद्दिश्य सप्रश्रयं कृताञ्जलि: अभाषत, ''देव, मम नाम शेषेन्द्र:। अहं ब्राह्मण:। अस्माकं पौरोहित्यम् उपाध्यायपदम् आचरामि अहम्। अहम् गृहे पितृभ्यां सह निवसामि। अहं तयो: एकमेवापत्यम्। मम पितृभ्यां आम्रफलस्य अवलेह: अतीव रोचते। अत: मया अपक्वानाम् आम्रफलानाम् अवलेह: कृत:। मम पितरौ तीर्थयात्रात: पञ्चषट् दिनेभ्य: अनन्तरं प्रत्यागमिष्यत:। श्व: विवाहकर्मणि पौरोहित्यं निवोढुं ग्रामान्तरं गमिष्यामि। मम गृहे केवलं जवनिका: सन्ति, द्वाराणि न सन्ति। अहं चिन्तितोऽस्मि यत् कोऽपि मम अवलेहं चोरयेत्। अत: अहं तद् अत्र आनयम्। भवत: समीपे रक्षार्थं विमुञ्चामि स्वामिन्, कृपया सुरक्षितं भवतु एतत् अत्र।''

शेषेन्द्रस्य आम्रावलेहस्य रक्षणार्थं प्रार्थनाम् अस्थानयाचनां मत्वा महाराज:भृशं क्रुद्ध: किन्तु तदनन्तरं बालकस्य स्वपितरौ प्रति अनुरागं दृष्ट्वा स: अत्यन्तं प्रमुदित: जात:। तेन सेवका: तद् भाण्डारे आगारे स्थापयितुम् आदिष्टा:। शेषेन्द्र: सुखेन तत: सकलामपि चिन्तां समुत्सृज्य स्वकार्यार्थं ग्रामान्तर प्रातिष्ठत।

चतुर्दिनानन्तरं शेषेन्द्रः राजसभाम् आगतः। राजा रविवर्मा तम् निमन्त्रयत् आसनं दर्शितवान्। सः बालकस्य पालकयोः कुशलम् अपृच्छत्। ततः तेन सेवकाः तं मृद्भाण्डम् आनेतुम् आदिशत्।

राजा कुतुहलेन अपृच्छत्, किं त्वया एव एतद् आम्रसंधितं कृतम् अथवा सत्कारपूर्वकम् साहाय्यं गृहीतम्?

''देव, मया एव कृतम्'', इति शेषेन्द्रः सविनयम् अवदत्।

''साधु! अहं तव हस्तनैपुण्यं दृष्टवा विस्मितोऽस्मि। आम्रसन्धितं तु अतीव स्वादिष्टम् अस्ति। कृपया, सहस्रवराहाः पारितोषिकरुपेण स्वीकरोतु। एतेन धनेन दारिद्यात् द्रागेव मुक्तः भविष्यसि'', आत्मनः गुणग्राहकत्वस्य गर्वं वहन् सगर्वं राजा अवदत्।

शेषेन्द्रः सोपहासम् अहसत् अभाषत, ''स्वामिन्, भाषणे अविज्ञायैव प्रकाशितस्खलनः कृतापराधः भवान् अक्षन्तव्यः यतः यद् संधितं रक्षणार्थः दत्तम्, भवान् संधितस्य अभिलाषं तथा आस्वादनं रोद्धुं न अशक्नोत्। यः कोऽपि अन्येषां वस्तूनि स्वीकृत्य भुङ्क्ते तस्मिन् न किमपि गर्ह्यं पश्यति सः स्वर्गं न अर्हति।

शेषेन्द्रेण ततः अग्रे दृढस्वरेण उक्तं च, अयुक्तं जानन् अपि यः आचरति सः नरकं प्रति गच्छति। युक्तं कार्यं यद् अन्येषां कल्याणं करोति तद् मोक्षं प्रति यापयति। अयमेव स्वर्गनरकयोः भेदः नान्यः।''

चाटुकारवचनासदृशं निःस्पृहं, निर्भयं न्याय्योपदेशयुतं च बटोः शेषेन्द्रस्य वचनं राज्ञः नेत्रोन्मीलनाय अकल्पयत्। आत्मनः दोषम् अवगम्य स्वर्गनरकयोः भेदं सूर्यप्रकाशवत् स्पष्टं कृतवन्तं शेषेन्द्रं सत्कृत्य च सः स्वाचरणे चिन्तने च परिष्कारं विदधातुं दृढां मतिमकरोत्।





# पाककलावित् पतिः

**न**वोढायाः नर्मदायाः विवाहोत्तरं बहुविधाः समस्याः आरब्धाः। तस्याः पतिः हरिहरः कुत्रापि किमपि कार्यं कर्तुं न गच्छति स्म। प्रत्युत सः सर्वदा नर्मदया सहैव तिष्ठति स्म। सा यदा पाकशालायां भोजनं पचति स्म तदा एषः तस्याः समीपं स्थित्वा पाकक्रियाणां विषये सूचनाः करोति स्म। भोजनार्थम् उपविष्टे सति सः पदार्थान् निन्दति स्म । नर्मदा स्वकार्ये पत्युः हस्तक्षेपम् अधिककालपर्यन्तम् सोढुम् न अशक्नोत्। अतः सा तस्याः प्रतिवेशिन्यै: चम्पायै सर्व वृत्तान्तं न्यवेदयत्। चम्पायाः स्वकीयः पाचनोद्योगःएव आसीत्।

''तव पतिः त्वया पाचितम् अन्नम् निन्दति, तव उपहासम् करोति, खलु?'' चम्पा अपृच्छत्। ''न केवलम् एतावदेव अपि तु सः किमपि धनार्जनं न करोति'' चिन्ताक्रान्ता नर्मदा अवदत्।

''अहं तव पतिम् एतस्मात् दुरभ्यासात् परावृत्तम् करिष्यामि,'' चम्पा इत्थं समाश्वासयत्।

सायं चम्पा नर्मदायाः गृहं गत्वा तस्याः पतिम् अवदत्, ''नर्मदा अवोचत् यत्त्वं व्यञ्जनानां उत्तमः रसज्ञः असि। श्वः अस्माभिः एकस्य महापर्वणः कृते सुवर्णवणिजः सत्यमहाभागस्य गृहे पाकः करणीयः अस्ति। सः सत्यवर्यः न कामपि न्यूनतां सहते। अतः अस्मिन् कार्ये यदि अस्माभिः श्वः पाच्यमानानां पदार्थानां रुचिम् आस्वाद्य पदार्थेषु लवण-कटुतयोः विषये त्वं कथयिष्यसि तर्हि अस्माकं कार्यं सुष्ठु वर्तेत। एतत्कार्यं विनामूल्यं न करणीयम् अस्ति त्वया, एतदर्थं तुभ्यं द्विशतं रुप्यकाणि दास्यामि।''

''अवश्यम् ! अहं तु अस्मिन् कार्ये अतीव निपुणः अस्मि'' इति साभिमानम् अवदत्

पी. कृष्णमूर्तिः

हरिहरः। अन्येद्युः हरिहरः चम्पया सह कार्यार्थं प्रस्थितः।

पदार्थान् लिढ्वा तेषां रुचीः अनुभूय ते पदार्थाः रुचिकराः वा न वा इति वक्तव्यम् एतत् बहु महत्त्वपूर्णम् कार्यम् अस्ति इति सः अचिन्तयत्। सः यावत् नानुमन्यते तावत्ते पदार्थाः नान्येभ्यः परिवेषिताः न भवन्ति स्म। एवं सः पाककलासम्बद्धानि कार्याणि कर्तुमारभत।

सायं चम्पा भोजनोत्तरं हरिहरम् अवदत्, ''सर्वविधपदार्थाः बह्वेव रुचिकराः सञ्जाताः यतः त्वया पूर्वमेव तेषां रुचयः आस्वादिताः। श्वः पुनरपि अन्यस्य एकस्य वणिजः गृहे एकं स्नेहभोजनम् आयोजितम् अस्ति। अतः अवश्यम् आगच्छ त्वम्'' इति उक्त्वा सा तस्मै द्विशतं रुप्यकाणि अदात्।

''एषः तु मम सम्मानः एव'' इति अवदत् हरिहरः। अनन्तरं सः गृहं गतः पत्न्यै साभिमानं च अकथयत् स्वस्य महिमानम्। स्वस्य एतत् कौशलम् विज्ञाय अतीव आनन्दितः सञ्जातः सः।

तदारभ्य सः विविधान् सूपान् आस्वाद्य तथा च अन्यकर्मकराणां कार्याणि पर्यवेक्ष्य पाकसिद्धतायाः गतिं वर्धयितुम् स्वयोगदानं दातुम् आरभत। अधुना हरिहरः चम्पायाः पाकोद्योगस्य एकः सदस्यः अभवत्। सः तदङ्गभूतकार्याणि शीघ्रम् अधीत्य उत्तमपाचकरूपेण प्रतिष्ठां सम्पादितवान्। स्वल्पेष्वेव दिनेषु हरिहरः तस्मिन् नगरे विद्यमानेषु उत्तमेषु पाचकेषु अन्यतमोऽभवत्।

अधुना कार्यबाहुल्यात् श्रान्तस्य हरिहरस्य स्वेन पाचितान् पदार्थान् खादितुमपि इच्छा न भवति स्म। यदा कदापि सः गृहे भवति स्म तदा सः पत्न्या पाचितान् विविध पदार्थान् आस्वादयति स्म। इदानीम् सः पत्न्याः पाककार्येषु दोषान्वेषणम् न करोति स्म यतः ईदृशकार्ये जायमानाः समस्याः कष्टाः च तेन विज्ञाताः आसन्।





# बिम्बं प्रतिबिम्बं च

विशाल-नगरे विवेकवान् नाम कश्चन राजा निवसति स्म। प्रतिदिनं प्रातः सायं च प्रासादस्य सौधं समारुह्य अटन् राजा सूर्योदयस्य सूर्यास्तस्य च विलोभनीयं दृश्यम् अनुभवति स्म।

प्रत्यहम् उषसि प्रासादस्य निकटतः कश्चित् काष्ठच्छिद् काष्ठानि छेत्तुं वनान्तरं निर्गच्छति स्म, तथा सन्ध्यासमये काष्ठसञ्चं मस्तके निधाय प्रत्यागच्छति स्म।

प्रतिदिनं सायं प्रातः सः काष्ठच्छिद् प्रासादनिकटतः दृश्यते स्म। यदि वनं प्रति गच्छन्तं काष्ठच्छिदं राजा पश्यति स्म, तदा सदयः भूत्वा चिन्तयति स्म, ''खलु निर्धनः अयं वराकः कृशः दृश्यते। प्रतिदिनं यदि एवं सः न परिश्राम्येत तर्हि तस्य जीवनं कठिनम् इति मन्ये।''

यदा सायङ्काले काष्ठसञ्चं मस्तके धृत्वा प्रत्यागच्छन् सः दृश्यते तर्हि राजा तस्मै किमर्थं कुप्यति स्म इति अतर्क्यम्, 'खलु दुरात्मा अयं, यदि एतस्य शरीरात् त्वचं अपि निष्कृष्यते, तत् नैव अधर्म्यम्' इति।

राजा अपि एवं विचिन्त्य विस्मितोऽभूत् यत् एकं मनुष्यं दृष्ट्वा प्रातःकाले काचित् भावना समुत्पद्यते परन्तु सायङ्काले तु तमेव दृष्ट्वा विपरीतः भावः समुद्भवति।

एवं विचिन्त्य राजा तस्य मन्त्रिणम् आहूतवान् आत्मनः अनुभवं कथयित्वा

सी. कूर्मचार्युलुः

पृष्टवान् च यत् 'एवं परस्पर-विरोधिन्यः भावनाः किं समुद्भवन्ति? अस्य कारणम् अन्वेषणीयम्।'

कारणम् अन्वेष्टुं मन्त्रिणा त्रिदिनात्मकः अवधिः याचितः। परेद्युः मन्त्री निर्धनस्य वेषं परिधाय काष्ठच्छिदम् अनुसृत्य वनम् अगच्छत्। अखिले दिनाऽवधौ तेन नितरां परिश्राम्यन् काष्ठच्छिद् दृष्टः। सायङ्काले अपि मन्त्री तम् अन्वसरत्।

मन्त्री ज्ञातवान् यद् प्रातःकाले काष्ठच्छिदं दृष्ट्वा राजा किमर्थम् अद्रवत् इति। परन्तु सायंसमये तमेव पश्यतः राज्ञः कोपस्य कारणं ज्ञातुं मन्त्री तु असमर्थः।

अन्यस्मिन् दिने मन्त्री साधुवेषं परिधाय काष्ठच्छिदः गृहम् अगच्छत्। तस्य पत्नी मन्त्रिणं गृहं नीत्वा तं सत्कृतवती।

तत्र मन्त्री चन्दनकाष्ठस्य सुगन्धम् अजिघ्रत्, ''मन्ये, गृहे बहूनि चन्दनकाष्ठानि सन्ति। तानि विक्रीय किं न सुखेन निरुह्यते? किमर्थं ईदृशं कष्टप्रदं जीवनं यापयथः?'' सहानुभूतियुक्तस्वरेण मन्त्री अपृच्छत्।

''महाशय! उच्चैः मा वदतु। यदा मत्स्वामी काष्ठानि कर्तयति, तदा कदाचित् चन्दनकाष्ठानि अपि प्राप्यन्ते। मया एकस्यां कक्षायां चन्दनकाष्ठानि राशीकृतानि। राजा तु कदाचन मरिष्यति, तदा तस्य दहन-



संस्कारसमये चन्दनकाष्ठानि महता मूल्येन क्रेष्यन्ते, अतः क्षुद्रमूल्येन अविक्रीय मया तानि गृहे एव निक्षिप्तानि" काष्ठच्छिदः पत्नी अवदत्।

मन्त्रिणा ज्ञातं यद् राजा काष्ठच्छिदे किमर्थम् अक्रुध्यत्। यदा काष्ठच्छिद् प्रातः काष्ठानि छेत्तुं वनं प्रचलति स्म तदा स्वदारिद्र्यविषये चिन्तयति स्म यद् निर्वाहयोग्यानि काष्ठानि लभ्यन्ताम्, तदा राज्ञः हृदयं तं दृष्ट्वा द्रवति स्म।

यदा काष्ठच्छिद् आत्मनः कार्यं समाप्य गृहं प्रत्यागच्छति तदा सः चन्दनं स्मरन् विचिन्तयन्ति स्म यद् 'यदि राजा सत्वरं मरिष्यति तर्हि साधु स्यात्, यतः चन्दनकाष्ठानि महता मूल्येन विक्रेष्यन्ते।' तदा राजा काष्ठच्छिदं पश्यन् तस्मै कुप्यति।

काष्ठच्छिदः राज्ञश्च भावौ खलु बिम्ब-प्रतिबिम्बसमानौ आस्ताम्।

मन्त्री काष्ठच्छिदः गृहात् निर्गत्य स्वगृहं प्रातिष्ठत।

अन्येद्युः नित्यक्रमानुसारेण मन्त्री राजसभायाम् उपस्थितः।"मन्त्रि-महोदय, अपि भवता भेदः ज्ञातः वा?" राजा अपृच्छत्।

"मया सत्यं ज्ञातम्। तस्मिन् श्रुते अपि यदि काष्ठच्छिदः दण्डनं न भवेत् तर्हि एव अहं सत्यं निवेदयिष्यामि"। मन्त्रिणा यद् घटितं तत् सर्वं राज्ञे निवेदितम्।

राजा व्यचिन्तयत् यद् काष्ठच्छिद् मम मृत्युं एव अभिलषते

यतः सः दरिद्रः। राज्ञा काष्ठच्छिद् आहूतः उपदिष्टः तस्मै द्रव्यं च दत्तं, येन सः भूरिकष्टात् विमुक्तः दरिद्रः।






# कृषकस्यावेदनम्

**अ**थैकदा कस्मिंश्चित् ग्रामे कश्चन दरिद्रः कृषकः निवसति स्म। एकस्याः गोः ऋते न तस्य स्वीयं किमपि धनम् आसीत्। कार्यबाहुल्यात् तां तृणं चारयितुमपि कृषकः समयं न प्राप्नोति स्म। भक्षणाभावात् अतीव कृशा सा आदिनं कृषकस्य गृहाङ्गणे एव बद्धा तिष्ठति स्म।

अस्य कृषकस्य अङ्गणस्य पार्श्वे एव कस्यस्विद् धनिकस्य भूमिपतेः खलम् आसीत्। तस्मिन् गवां कृते महता प्रमाणेन तृणं सञ्चितः आसीत्। कदाचित् ततः प्रवर्तितेन मारुतेन प्रसार्यमाणः हरिततृणानां सुगन्धः कृषकस्य गवा आघ्रातः। तेन आकृष्टा सा बन्धनं ध्वंसयित्वा कृषकधनिकयोः गृहे वर्तमानां वृतिं च भञ्जयित्वा धनिकस्य खलं प्राविशत् तृणभक्षणं चारभत।

तद्दृष्ट्वा भूस्वामिनः कश्चन सेवकः कोपेन गोः मस्तके प्राहरत्। एकेनैव प्रहारेण धेनोः पञ्चप्राणाः निर्गताः। कृषकः महता दुःखेन विलपन् भूस्वामिनं गत्वा सर्वं न्यवेदयत्। भूस्वामी तस्य सर्वमपि निवेदनम् अशृणोत् स्वसेवकस्यापि वचनम् आकर्णयत्। "एकतः स्वगावम् अन्यस्य खले चारयति अन्यतः अन्यायमपि आरोपयति अयम्। एनं मिथ्यावदिनं गृहात् बहिः स्थिते स्तम्भे बद्ध्वा सन्ताडय!" इति धनिकः तस्य सेवकम् आदिशत्।

कृषकस्य गौः तु मृता एव, तदतिरिच्य सः निर्दोषोऽपि सः ताडनं प्राप्नोत्। भृशं दुःखितः सः स्वपत्न्यै सर्वं वृत्तं न्यवेदयत्।

"यद्यपि भूस्वामिना न्याय्यम् आचरणं न कृतं तथापि भवान् हतधैर्यो मा भवतु। भवान् साक्षात् राजस्थानं गत्वा एनां समस्यां निवेदयतु।

आर्. सुशीला



राजा तु न्यायप्रियः। सः निःसंशयम् एनम् अन्यायं परिहरेत्'' इति कृषकस्य पत्नी अवदत्।

परं यत् किमपि घटितं तत् राज्ञे कथं निवेदनीयम् इति तयोः महती समस्या। अक्षरज्ञानं अवर्तिष्यत चेदेव राज्ञे निवेदनपत्रलेखनं अशक्ष्यत। परं द्वावपि लेखनाभिज्ञौ आस्ताम्। अतः तौ एकं काष्ठफलकम् आनीय तस्मिन् किञ्चन चित्रं लिखितवन्तौ। ताभ्यां स्वगृहं, भूस्वामिनः गृहं द्वयोर्मध्ये वर्तमाना वृतिः, वृतौ गवा कृतं छिद्रं, भूस्वामिनः दासेन यत्र धेनोः हननं कृतं तत्स्थानं, कृषकस्य सन्ताडनं यत्र जातं सः स्तम्भः इत्यादिकं सर्वं चिह्नरूपेण काष्ठफलके आलिखितम्।

''साधु! एतत् चित्रं दृष्ट्वा राजा सर्वमपि घटितं लीलया अवगच्छेत्। अधुनैव भवते पाथेयं ददामि अहम्। भवान् सपद्येव राजधानीपथे साधयतु'' इति पत्नी अवदत्।

कृषकः गृहात् प्रतिष्ठित अपराह्णे च एकम् उपवनं प्राप्नोत्। तत् उपवनं राज्ञः आसीत्। तत्र कृषकः कञ्चन पुरुषम् अपश्यत्। सः पुरुषस्तु साक्षात् राजा आसीत्। परं सामान्यवेषं धृतवन्तं तं कृषकं राजेति न पर्यचिनोत्।

''नमस्ते आर्य!'' कृषकः अभिवादनम् अकरोत्।

''नमस्ते! कस्त्वम्? कुत्र गच्छसि?'' राजा अपृच्छत्।

''राज्ञे मम समस्यां निवेदयितुं राजधानीं गच्छामि। इदं च मम निवेदनपत्रं यद्धि मया पृष्ठे बद्धम् अस्ति। मम गौः वृथैव प्राणघातेन हता तेन दुष्टेन। भवतु, बुभुक्षा बाधते माम्। रोटिकां भुक्त्वा सर्वं वृत्तं कथयामि'' कृषकः अवदत्।

तस्मिन् उपवने वहतः निर्झरस्य तीरे कृषकः राजा च उपविष्टौ। कृषकस्य तस्य रोटिकायाः नवनीतस्य च अर्धं राज्ञे प्रायच्छत्। तद्भुक्त्वा द्वाभ्यां निर्झरजलं पीतम्।

''दर्शय मे तव निवेदनपत्रम्!'' राजा अवदत्।

कृषकः तस्मै काष्ठफलकं प्रदर्श्य अवदत्, ''पश्य, इदं मम गृहम् इदं च प्रतिवेशिनः भूस्वामिनः। द्वयोर्मध्ये एका वृतिः वर्तते। अयं हि सः मार्गः येन मम गौः वृतिं भञ्जयित्वा तस्य भूस्वामिनः खलं प्राविशत्। अत्र भूस्वामिनः

सेवकः तां महादण्डेन मस्तके प्राहरत् व्यापादयच्च। यदा अहं भूस्वामिनं गत्वा सेवकस्य एनम् अन्याय्यं वर्तनं न्यवेदयं तदा सः मां सेवकेन स्तम्भे बन्धयित्वा समताडयत्। यत्र कुत्रापि अभियोक्तुम् अर्हसि माम्। न कस्मादपि बिभेम्यहम्'' इत्यपि अब्रवीत् स धनोन्मत्तः।

''तर्हि काऽत्र चिन्ता। यथा मह्यम् एनम् अन्यायं न्यवेदयः तथैव राज्ञे अपि कथय। सः निश्चयेन न्यायदानं कुर्यात्। अस्तु, साधयाम्यहम्'' इत्युक्त्वा कृषकेण अनभिज्ञातः राजा ततः निर्गतः।

अपरेद्युः कृषकः काष्ठफलके लिखितम् निवेदनं गृहीत्वा राज्ञः आस्थानम् अगच्छत्। तत्र राजा नृपोचितवस्त्राणि परिधृत्य स्वर्णालङ्कारैश्च विभूषितः सर्वैः राजचिह्नैः विराजमानः सिंहासने आस्ते स्म। पार्श्वे एव तस्य द्वादश मन्त्रिणः पङ्क्तौ स्वस्वस्थानेषु उपविष्टाः आसन्।

ऋजुस्वभावः कृषकः राजानम् 'अयमेव ह्यः उपवने दृष्टः जनः' इति न परिचितवान्। सः तस्य निवेदनं पङ्क्तौ अन्ते उपविष्टाय मन्त्रिणे दत्त्वा प्रार्थयत्, ''स्वामिन्, कृपया अस्मिन् मदीये निवेदने सकृत् दृष्टिं प्रसारयतु भवान्। भूस्वामिनः कृतं मम गोः हननं मम ताडनम् इत्यादिकम् सर्वम् अन्याय्यं घटनम् अत्र वर्णितम् अस्ति। कृपया एतत् सकृत् पश्यतु।''

मन्त्री तं काष्ठफलकं दृष्ट्वा अवदत्, ''मया तु अस्मिन् किमपि नावगम्यते। किमेतत् निरर्थकं




चित्रं नाम तव आवेदनम् अस्ति?'' इत्युक्त्वा कुपितः सः तत् निवेदनं पार्श्वे उपविष्टाय अन्यस्मै मन्त्रिणे अयच्छत्।

सोऽपि मन्त्री तं काष्ठफलकम् एकदृष्ट्या विलोक्य अवदत्, ''सत्यमेव उक्तं भवता! एतत् निवेदनं भवितुं नार्हति। एनं मूर्खं निष्कासयतु इतः!''

तावतैव एनं कोलाहलं श्रुत्वा नृपेण उक्तं, ''तं मम सम्मुखम् आनयतु।''

कृषकस्य निवेदनफलकं निरीक्ष्य शिरःस्कन्धचालनपूर्वकम् अनवबोधं प्रदर्श्य च प्रत्येकं मन्त्री तं फलकं क्रमेण समीपम् उपविष्टवते मन्त्रिणे प्रायच्छत्। अन्ततो गत्वा सः फलकः राजहस्तं प्राप्नोत्। तं वीक्ष्य राज्ञा उक्तं, ''एतत् तु सर्वं करामलकवत् स्पष्टं प्रतीयते।

अत्र आयाहि!'' इति राजा कृषकम् आह्वयत्।'' एतत् तव गृहम्, एतच्च भूस्वामिन:, सत्यं खलु?'' नृपेण पृष्टम्।

''आम् देव!'', कृषक: प्रत्यवदत्।

''एतच्च वृतौ छिद्रं दृश्यते। तेनैव तव धेनु: भूस्वामिन: खलं प्राविशत् खलु?''

''आम् महाराज!'', कृषक: अवदत्।

''अन्यदपि सर्वम् अवगम्यते स्पष्टतया। भूस्वामिन: सेवकेन तव गौ: अत्र हता। त्वां च एतेन स्तम्भेन बद्ध्वा सन्ताडितं तेन'' राजा अब्रवीत्।

''या दुर्भाग्यपूर्णघटना संवृत्ता सा देवेन यथावत् ज्ञाता'' इति कृषक: मन्दस्वरेण अवदत्।

''अस्तु! इदानीं तावत् त्वं स्वगृहं प्रतियाहि। पत्न्यै च कथय यत् अहं न्याय्यम् आदेशं दास्यामि।''

राज्ञ: अनेन कथनेन समाश्वस्त: कृषक: तं शिरसा प्रणम्य तन्निवेदनाशयं अनवगतवत: तस्य च राजास्थानात् निष्कासनम् इच्छत: मन्त्रिण: सकोपम् आलोकयन् तत: निर्गत:।

सपद्येव राज्ञ: न्यायाज्ञा भूस्वामिना लब्धा। अपराधी भूस्वामी कृषकस्य क्षमां याचताम् इति नृपस्य निर्णय: आसीत्। अथ च स: कृषकस्य कृते नूतनं गृहं, पशुशालां निर्मीयात्, तस्मै महद्भूण्डं सप्त धेनू: दद्यात् इत्यपि राज्ञा आदिष्टम्।

''मया तु पूर्वमेव उक्तम् आसीत्, न्यायप्रिय: अस्माकं राजा सत्यमेव अस्मत्कष्टं दूरीकुर्यात्'' इति अवदत् कृषकपत्नी।

''अहो पाण्डित्यं राज्ञ:! स: तु सर्वमपि जानाति। मम निवेदनं सकृत् दृष्ट्वैव सर्वं वृत्तम् अवागच्छत्। तस्य आस्थाने द्वादश मन्त्रिण: आसन्। परं नैकेनापि मम निवेदनस्य आशय: अवबुद्ध:। सर्वेऽपि निर्बुद्धा: अक्षरशत्रव:! किमर्थं खलु महता धनदानेन आस्थाने च तेषां स्थानं कल्पयित्वा वृथैव पाल्यन्ते ते?'' इति राज्ञ: अवगमनस्य रहस्यीभूतं तत्त्वम् अजानता ऋजुमनस्केन कृषकेण साश्चर्यम् उक्तम्!





# लघुनाणकानि

बेगनानपुरे समता-रूपनारायणौ नाम दम्पती वसतः स्म। खगेन्द्रः तयोः एकमात्रापत्यम्।

यदा खगेन्द्रः दशवर्षीयः आसीत् तदा तस्य पिता हृद्रोगेण दिवं गतः। तदारभ्य उदरभरणार्थं समता अन्येषां गृहकार्याणि कर्तुम् आरभत। एवं सा यावत् अर्जयति स्म तेन यथाकथाञ्चित् स्वपुत्रं पालयति स्म। केषाञ्चन वर्षाणाम् अनन्तरं समता पक्षवायुग्रस्ता जाता। तदैव खगेन्द्रेण स्वाध्ययनं स्थागितम्। लघुकार्याणि कृत्वा धनार्जनम् आरभत खगेन्द्रः।

गच्छता कालेन समता स्वयमेव सन्निहितं मृत्युम् अवागच्छत्। तया स्वपुत्रः स्वसमीपे आहूतः उक्तः च, "प्रिय पुत्र, मत्कृते त्वं बहु श्राम्यसि। ये स्वपितरौ सन्तोषयन्ति सेवन्ते च ईश्वरः सदैव तेषां साहाय्यकृत् भवति। तव सर्वदा कल्याणं भवेत्। अहं तुभ्यं केवलम् एतानि लघुनाणकानि दातुं शक्नोमि। एतानि तव कृते नित्यं मङ्गलकारकाणि भविष्यन्ति" इति।

तेषु नाणकेषु पादाणकम् अर्धाणकम, आणकं तथा च द्व्यणकम् इत्येवं नाणकानि आसन्।

खगेन्द्रेण तानि नाणकाणि सुरक्षिततया स्वसमीपे स्थापितानि । मातुः अन्त्यसंस्कारविधीन् समाप्य सः तत् ग्रामं त्यक्त्वा ततः निर्गतः।

किन्तु ततः कुत्र गन्तव्यम् इति सः स्वयमपि न जानाति। तदैव कश्चन भिक्षुः तत्र प्राप्तः। तं दृष्ट्वा खगेन्द्रः धनकोशे स्वहस्तं स्थापितवान्। ततः एकं पादाणकनाणकं निष्कास्य तेन भिक्षुकाय दत्तम्। "जात, पूर्वदिशं प्रति गच्छ। तत् तव लाभाय स्यात्" इत्युक्त्वा भिक्षुः

एन्. शिवनागेश्वरराव:



खगेन्द्राय आशीर्वचांसि दत्तवान्।

खगेन्द्रेण पूर्वदिशं प्रति प्रवास: आरब्ध:। मार्गे स: एकं वनं प्राप्त:। अरण्येऽस्मिन् दुक्रुर: नाम कश्चन राक्षस: आसीत्। खगेन्द्रेण वनप्रवेशे कृते दुक्रुर: मानवगन्धम् आघ्राय तत्पुरत: उपस्थित:।

तालवृक्ष: इव उन्नतं दुक्रुरं वीक्ष्य खगेन्द्र: तु भीतभीत:। किन्तु, ''तव नित्यं कल्याणमेव भवेत्'' इति मातु: वचनं स्मृत्वा स: धैर्यं प्रत्नोत्।

दुक्रुर: खगेन्द्रम् अवदत्, ''रे मानव, अद्य बहुकालानन्तरं मनुष्यस्य मांसं भक्षयितुम् लब्धोऽवसर: अहम्। तथापि वर्तते तत्र कश्चन अङ्क: य: मत्कृते न लाभकर:। एकत: दशपर्यन्तं विद्यमानेषु एकम् अङ्कं चिनु। त्वया चित: अङ्क: यदि मम दुर्भाग्यशाली स्यात् चेत् अहं त्वां मुञ्चेयम्। अन्यथा त्वां कवलीकरिष्यामि'' इति।

खगेन्द्र: स्वकोशे हस्तं स्थापितवान्। तत्र मात्रा दत्तेषु नाणकेषु तस्य हस्त: अर्धाणकं (३पैसा) स्पृष्टवान्। पुन: किमपि अविचिन्त्य स: उच्चै: अङ्कम् अवदत् ''त्रीणि'' इति।

तदङ्कं श्रुत्वा निराश: राक्षस: उक्तवान् च, ''एषा तु मम दुर्भाग्यशाली सङ्ख्या। त्वया एतस्यां सङ्ख्यायाम् उक्तायामपि यदि अहं त्वां भक्षयामि तर्हि निश्चयेन अनन्तरं आपद्ग्रस्त: भविष्यामि। अत: शीघ्रं गच्छ इत:'' एवं खगेन्द्र: अग्रे प्रस्थित:।

इतोऽपि कानिचन दिनानि प्रवासं कुर्वन् खगेन्द्र: वने मार्गभ्रष्ट: जात:। स: इतस्तत: आटत्। कुत्र गन्तव्यम् इति अजानन् स: वनवासिनां ग्रामं प्राप्त:। ग्रामे प्रविष्टे एव स: वन्यमानवै: बद्ध: जात:। ते खगेन्द्रं स्वस्वामिनं साराबन्दिनं प्रति नीतवन्त:।

क्रोधपूर्णया दृष्ट्या खगेन्द्रं पश्यन् साराबन्दी अगदत्, ''य: कोऽपि अस्मद्ग्रामं प्रविशति तं मनुष्यं ग्रामात् बहि: जीवितं गन्तुं वयं न अनुमन्यामहे। तथापि वर्तते अत्रापि कश्चन समय:'' इति। एवं कथयित्वा स: खगेन्द्रं मानवाकारसदृशीं ग्रामदेवतां प्रति अनयत्।

देव्या: पुरत: षट् चषका: आसन्। तान् दर्शयित्वा साराबन्दी अवोचत्, ''तेषु एकस्मिन् द्राक्षारस: वर्तते। अन्ये सर्वेऽपि चषका: विषपूरिता:

सन्ति। त्वया तेषु एकः चेतव्यः। यदि अस्माकं देवी त्वां प्रति अनुकूला चेत् त्वं जीविष्यसि अन्यथा मृत्युं विना नान्या गतिः'' इति।

खगेन्द्रेण स्वमातुः स्मरणं कृत्वा कोशात् एकं नाणकं बहिः निष्कासितम्। तद् आणकम् (६पैसा) आसीत्। शीघ्रं तेन षष्ठः चषकः स्वीकृत्य तद्गतं पेयं च सेवितम्। नूनं सः द्राक्षारसः एवासीत् अतः खगेन्द्रः रक्षितः।

खगेन्द्रं प्राशंसन् साराबन्दी अभाषत,''त्वं भाग्यशाली खलु असि। अस्मद्देवी तव अनुकूला। त्वं गन्तुमर्हसि'' एवमुक्त्वा सः स्वयं खगेन्द्रं मार्गं प्रति प्रापयितुम् आगतः, अवदत् च ''यदि त्वम् इतः दक्षिणदिशं गमिष्यसि तर्हि सुवर्णपुरीराज्यं प्राप्स्यसि''।

तस्य वचनानुसारं यदा खगेन्द्रः सुवर्णपुरी राज्यं प्राप्तवान् तदा तेन मार्गे शताधिकाः जनाः सम्मिलिताः दृष्टाः। ''अत्र किं विशिष्टं पर्व आचर्यते'' इत्यपि तेन पृष्टम्।

तत्रस्थाः जनाः ऊचुः, ''अस्माकं राजा सुवर्णधीरः अकस्मात् मृतः। तस्य कोऽपि वशंजः नास्ति। अतः एषः राजगजः नवराज्ञः नियुक्तिं करिष्यति। यस्य कस्यापि कण्ठे अयं राजहस्ती मालां धारयिष्यति सः एव अस्माकं राजा भवेत्। भवान् अपि स्वभाग्यं परीक्षितुम् अर्हति'' इति।

खगेन्द्रः स्वकोशे हस्त स्थापितवान्। तस्य हस्तेन द्व्यणकं स्पृष्टम्। खगेन्द्रेण तद् नाणकम् आकाशे उत्क्षिप्तम्। भूमौ नाणकं यत्र पतितं तत्र गत्वा खगेन्द्रः स्थितः।

केनचित् कालेन राजहस्ती तेन मार्गेण आगतः खगेन्द्रस्य कण्ठे च मालां धारितवान्। सुवर्णपुरी राज्यस्य प्रजाजनाः खगेन्द्रं स्वनृपरूपेण स्वीकृतवन्तः उद्घोषणं च आरब्धवन्तः।

मात्रा दत्तानां नाणकानां प्रभावेन सुवर्णपुरीराज्यस्य सिंहासनाधिष्ठितः खगेन्द्रः अधुना 'राजा खगेन्द्रसेनः' इति गौरवेण आख्यांप्यते।



# वाणिज्यम्

तुनरगाख्यग्रामे रघुनाथस्य स्वस्य शाकापणः आसीत्। रविः तस्य सहाय्यकः आसीत्। तस्य आपणः स्वच्छ-शाकार्थं न्यूनमूल्यार्थं च प्रसिद्धः आसीत्। तेन कारणेन जनाः ग्रामान्तरात् अपि शाकं क्रेतुं तस्य आपणमायान्ति। एकस्मिन् दिने प्रात एव कीर्तिवीरः नाम एकः धनिकः तस्य आपणमागतः। तेन रघुनाथस्य हस्ते शाकस्य बृहत्सूचिः दत्ता। तदनन्तरं 'भीमराजः' नामः शिक्षकः आपणम् आगच्छत्। तं दृष्ट्वा रघुनाथः स्वकार्यं स्थगयित्वा यत् शाकं भीमराजः क्रेतुमिच्छति तद् तस्मै दत्तवान्। तस्य कृतिं दृष्ट्वा कीर्तिवीरः मनसा अस्वस्थः जातः इति रविः ज्ञातवान्। शाकस्य बन्धनादिकं समाप्तम्। केनचित् कालेन कीर्तिवीरेण अपि शाकं स्वीकृतं तस्य मूल्यं दत्त्वा निर्गतवान् च। यदा सः निर्गतः तदा निरीक्ष्यमाणः रविः रघुनाथमुक्तवान्, "भवता कीर्तिवीरेण सह एवं किमर्थम् आचरितम्?"

रघुनाथः हसित्वा तमुक्तवान्, "भीमराजः प्रतिवारं शाकं क्रेतुम् अस्माकम् आपणमागच्छति। यदि अस्माकम् आपणम् आगत्य सः प्रतीक्षमाणः तिष्ठेत् चेत् सः अन्यापणं गच्छेत्। एवं अस्माकं नियमिताः ग्राहकाः अपगच्छेयुः। कीर्तिवीरस्य विषये वक्तव्यं चेत् पूर्वमेव अस्माभिः तस्य अर्धं साहित्यं सिद्धीकृतमासीत्। अतः सः अन्यत्र गन्तुं न प्रभवति। कीर्तिवीरः अस्माकं कृते अनागतपूर्वः ग्राहकः वर्तते। सः अस्माकम् आपणतः नियमितं क्रयणं न करोति। अतः कीर्तिवीरसदृशग्राहकार्थं वयं भीमराजसदृशग्राहकं त्यक्तुं न शक्नुमः। रघुनाथस्य वाणिज्यविषयिकीं प्रज्ञां दृष्ट्वा रविः चकितः जातः।

*- एस्. सुधारानी*



# सत्यम् इव असत्यम्

एकदा कश्चन महाराजः घोषितवान् यत् 'यः असत्यं सत्यवत् वक्तुं पारयति तस्मै एकं स्वर्णाम्रं दीयते' इति।

स्वर्ण-आम्रस्य प्राप्त्यर्थं बहवः राजभवनं प्रति आगतवन्तः। सर्वे अपि भिन्न-भिन्नप्रकारेण असत्यम् उक्तवन्तः। किन्तु तेषाम् असत्यकथनेन राजा न सन्तृप्तः। जनैः उक्तेषु असत्येषु बहूनि सत्यकथनान्यपि आसन्। अन्यानि तु नितराम् असत्यानि आसन्। अतः राजा स्वर्णाम्रं कस्मै अपि न दत्तवान्।

एकस्मिन् दिने एकः भिक्षुकः एकं बृहद्घटं स्वीकृत्य राजानं प्रति आगतवान्।

"किम् आवश्यकं तुभ्यम्?" राजा भिक्षुकं पृष्टवान्।

"भवता घटपरिमितं स्वर्णं मह्यं दातव्यम् अस्ति। भवान् मह्यं तथा प्रतिश्रुतवान् ननु!" भिक्षुकः उदतरत्।

"एतद् असत्यम् अस्ति। किं त्वं मां वञ्चयितुं प्रयतसे? मया कदापि तथा प्रतिश्रुतं नास्ति। मम सकाशात् त्वं किमपि न प्राप्स्यसि।" राजा उत्तरं दत्तवान्।

"असत्यमेव खलु? तर्हि तद् सुवर्णाम्रफलं दीयताम्" भिक्षुकः उक्तवान्।

भिक्षुकस्य सामर्थ्यम् अवगत्य राजा सन्तोषेण भिक्षुकाय स्वर्णाम्रं दत्तवान्।





# रुद्रम्मादेवी

बहुवीरप्रसवं खलु अस्माकं राष्ट्रम्। तेषु वीरेषु नैकाः स्त्रियोऽपि सन्ति, याः देशरक्षणार्थं स्वप्राणान् आहूतवत्यः, रणाङ्गणे महद्वीर्यं प्रकटितवत्यः, कौशलेन च राज्यशकटम् ऊढवत्यः। तास्वेव अन्यतमा वर्तते काकतीयरुद्रम्मादेवी।

दक्षिणप्रान्ते वर्तिषु साम्राज्येषु काकतीयसाम्राज्यं ख्यातकीर्तम् आसीत्। साम्राज्यस्य सुफलत्वात् सुजलत्वाच्च अत्र सर्वाः अपि प्रजाः सुखिन्यः सुसंस्कृताः साहित्यसङ्गीतकलाविदश्च आसन्।

काकतीयराजसु अन्यतमः आसीत् गणपतिदेवः। तस्य रुद्रम्माभिधाना एका एव कन्या आसीत्। पितुः परं राजसिंहासनस्य एकमात्रोत्तराधिकारिणी सा तत्पदार्हताम् अधिगन्तुम् आबाल्यादेव खड्गविद्या, अश्वारोहणं, राज्यशासनं, न्यायदानं इत्यादीनां राजपुत्रोचितं शिक्षणं प्राप्नोत्।

रुद्रम्मायाः मातुः नाम नारम्मा। रुद्रम्मा तु तस्याः एकमात्रं स्त्र्यपत्यम् आसीत्। कन्यापि स्त्रीजनसदृशललितकलासु अकृतमतिः सा नित्यं पुरुषोचितायां युद्धकलायामेव आसक्ता वर्तते इत्येते मात्रे नारम्मायै नैव रोचते स्म। सा नैकदा स्वभर्तुः गणपतिदेवस्य सम्मुखं निजम् असन्तोषं प्राकटयत्। परं राजा गणपतिदेवः किमपि अनुक्त्वा केवलं मन्दस्मितेन तत्कालं यापयति स्म।

रुद्रम्मायाः इदं पुरुषवत् युद्धकलाध्ययनं

तस्या: सखीभ्योऽपि न रोचते स्म। 'अन्या: राजकुमार्य: एव रुद्रम्मादेवी अपि उत्तमानि स्वर्णाभूषणानि, वस्त्राणि च धरतु, स्त्रीसुलभक्रीडासु रमतां, सलालनं वर्धतां, युववस्थां च प्राप्य अनुरूपेण वरेण परिणीता सती गृहस्थजीवने रता भवतु, प्रजावती च भूत्वा आत्मानं कृतार्थां करोतु' इत्येव तासां मतिरासीत्। अत: रुद्रम्मायाः मतपरिवर्तनं कर्तुं ताभि: समेत्य एका योजना कृता।

अथैकस्मिन् दिवसे आरामे लतामण्डपे आसीनायां रुद्रम्मायां सर्वा: अपि सख्य: उपहसन्तीव क्रमेण 'जयतु युवराज:, जयतु युवराज:' इति जयशब्दम् उच्चार्यमाणा: ताम् उपसृतवत्य:।

तम् अस्थानजयशब्दं श्रुत्वा रुद्रम्मा कश्चित् सङ्कोचम् अन्वभवत्, परं किमपि चाञ्चल्यम् अप्रदर्श्य, पूर्ववद्गाम्भीर्येण स्थिरदृष्ट्या सखी: दृष्ट्वा अवदत्, "ब्रूत, अयं युवराज: किं वा युष्माकं प्रियं करोतु?"

रुद्रम्मायाः अनपेक्षितं प्रतिस्पन्दं श्रुत्वा सर्वा: अपि सख्य: परस्परमुखावलोकनं कुर्वत्य: वाचं संयम्य स्थिता:। "किमर्थं सङ्कुचथ? किमिच्छथ? स्वैरं स्वैरं ब्रूत! युष्मद्वचनं पूर्णतां नेतुं सिद्धाहम्", रुद्रम्मा अब्रवीत्। 'ईप्सितं प्राप्तुम् अयमेव उत्तम: अवसर:' इति सखिभि: चिन्तितम्। ता: अवोचन्, "भवती शस्त्रपाणि: सती पुरुषवत् युद्धाभ्यासं न करिष्यति इत्येतावदेव वयम् इच्छाम:, नान्यत् किमपि!"



तच्छ्रुत्वा रुद्रम्मा क्रुद्धा अभवत्। 'रुद्रम्मा शस्त्राभ्यासात् विरमतु' इत्येष: सखीनां दुराग्रह: तस्यै न रोचते स्म। तस्या: पिता तु रुद्रम्मायाः शस्त्राभ्यासम् अनुमन्यते स्म। अत: सा तं त्यक्तुं सर्वथा नेच्छति स्म। परन्तु 'युष्मद्वचनं पूर्णतां नयामि' इति सखी: प्रति व्याहृतं वचनम् अवितथं कर्तुं सा अब्रवीत्, "युष्मदिच्छानुगुणम् अहं शस्त्राभ्यासं त्यजामि। परम् अत्र विद्यते मम कश्चन समय:। यदि कश्चन जन: मां द्वन्द्वयुद्धे पराजेष्यति तर्हि नाहं पुनरपि खड्गं स्पृशामि।"

तदाकर्ण्य आनन्दिता: सख्य: वार्तामिनां राज्ञे नारम्मायै अकथयन्। रुद्रम्मायाः सख्य: इव नारम्मया अपि चिन्तितं यत् तस्य कन्या द्वन्द्वयुद्धे केनापि योद्धृणा लीलया पराजिता भवेत् इति। सा मन्त्रिणम् आहूय आदिशत्, 'य: मम कन्यां द्वन्द्वयुद्धे पराजेष्यति तादृशं खड्गचालनकुशलं जनम् आह्वयतु' इति।

तत: स्मयमान: मन्त्री अवदत्, "देवि, कृपया क्षम्यताम्! भूतलेऽस्मिन् भर्तृदारिकां द्वन्द्वेयुद्धे पराजेतुं समर्थं जनम् अहं न जानामि।"

तदा चकिता नारम्मा अवदत्, "कथम् अविश्वसनीयं वचनं ब्रवीति भवान्? अस्मिन् देशे एकोऽपि तादृश: जन: विद्यते य: बालां सुकुमारीं च राजकन्यां द्वन्द्वयुद्धे पराजेतुं न प्रभवति इत्यत्र को वा विश्वसेत्?"

"देवि, अहं सत्यमेव वदामि। अस्मत्सेनापतिपुत्र: खड्गचालने कुशल:।



सः बहून् योद्धॄन् पराजितवान्। तं राजकन्यया सह योद्धुम् आदिशतु भवती'', इति मन्त्री अवदत्।

अपरेद्युरेव रुद्रम्मासेनापतिपुत्रयोः द्वन्द्वयुद्धम् आयोजितम्। तदानीं स्पर्धाङ्गणे नृपेण गणपतिदेवेन सह राज्ञी नारम्मा अथ च मन्त्री उपस्थितौ आस्ताम्।

द्वन्द्वम् अधिकं समयं यावत् न प्राचलत्। नातिचिरेण कालेन स्वकौशलं प्रदर्शयन्ती रुद्रम्मा प्रतिस्पर्धिनं निरायुधम् अकरोत् विजयिनी चाभवत्।

राज्ञी स्वकन्यायाः नैपुण्यं वीक्ष्य चकितचकिता अभवत्। परं सा स्वकन्यां शस्त्राभ्यासात् निवर्तयितुं प्रयत्नं बलादेव अन्वबर्तयत्। तया गणपतिदेवस्य अनुमतिं प्राप्य स्वदेशे विदेशे च घोषणा कारिता, यत् 'यः रुद्रमां खड्गद्वन्द्वयुद्धे पराजेष्यति सः सेनापतिपदं प्राप्नुयात्'।

तां घोषणां श्रुत्वा नैके युवानः योद्धारः राजकुमाराश्च रुद्रम्मां पराजेतुम् आयाताः, परं स्वयमेव युद्धे पराभूताः। अतः रुद्रम्मायाः शस्त्रपरित्यागोऽपि परिहृतः।

गणपतिदेवः इव रुद्रम्मापि कन्याः एव प्रासूत, न पुत्रम्। अतः सा स्वदौहित्रं प्रतामरुद्रमेव पुत्रभावेन् अपालयत्। गणपतिदेवस्य स्वर्गमनानन्तरं बहूनि वर्षाणि यावत् रुद्रम्मादेवी काकतीयसाम्राज्यं पर्यपालयत्। राज्यसेवायां रतायां तस्यां प्रतामरुद्रोऽपि युवराजपदं भूषयन् मातामह्याः साहाय्यं विदधाति स्म।

समर्थशालिनीस्त्रीरूपेण रुद्रम्मायाः कीर्तिः दशसु दिक्षु वितता। तस्याः शासनकालः नाम काकतीयसाम्राज्यस्य सुवर्णकालः इति मन्यन्ते जनाः।





# वामनः सिंहबलः

**आ**सीत् रामपुरे सिंहबलः नाम वामनः मनुष्यः। धनुर्विद्यायां खड्गयुद्धे च यद्यपि पारङ्गतः सः स्वस्य वामनत्वात् राजकार्यालये कदापि कार्यावसरं न प्राप्नोत्।

अन्ततः अन्तिमप्रयत्नरूपेण सः उद्योगप्राप्तये सेनापतिमेव दृष्टवान्। परन्तु ''इतोऽपि स्वस्य उन्नतिं वर्धयितुं प्रयत्नं करोतु, तदा उद्योगः लभते'' इति उपहासकराणि वचनानि उक्त्वा तं ततः गमितवान्। खिन्नः सिंहबलः गृहं प्रत्यागतः।

गृहगमनमार्गे सिंहबलः किञ्चित् कालं विश्रामाय वृक्षस्य अधः निद्रितः। अथ यदा सः सुप्तोत्थितः तदा पुरतः स्थितम् एकं युवानं सः अपश्यत्। ''मम नाम विजयः। समीपवर्तिनि ग्रामे कश्चन व्याघ्रः जनान् सन्त्रासयति इति सेनापतिना श्रुतम्। तं व्याघ्रं हन्तुं तेन अहं प्रेषितः।

किञ्चित् विचिन्त्य सिंहबलः अचिन्तयत् अवदच्च, ''अहमपि तत्कार्यार्थमेव प्रस्थितः। अहं स्वयं व्याघ्रं ग्रहीष्यामि सेनापतये च मम सामर्थ्यं प्रदर्शयामि''।

द्वावपि एकत्र प्रवासं कृत्वा चक्रपुरी नाम ग्रामं प्राप्तवन्तौ। ग्रामप्रमुखः तौ दृष्ट्वा अवदत्, ''व्याघ्रभयेन सर्वे ग्रामस्थाः अतीव त्रस्ताः। अद्यावधि व्याघ्रेण दश गावः षट् अजाः त्रयः पुरुषाः च मारिताः।''

''अहं तु तं व्याघ्रं स्वहस्तेनैव हन्तुं शक्नोमि। परन्तु सेनापतिः एनं विजयं तत्कार्यार्थं प्रेषितवान् अतः विजयः एव प्रथमम् अवसरं प्राप्नोतु।'' इति कथितं सिंहबलेन। अनन्तरं ग्रामजनैः परिवेषितम् अन्नं भुक्त्वा तैः यत्र निवासव्यवस्था तत्र सुखेन निद्रां कृतवान्।

एम्.आनन्दरावः



विजयः विपिने एकस्मिन् वृक्षे धेनुं बद्ध्वा व्याघ्रस्य प्रतीक्षां कृतवान्। परन्तु बहुकालं यावत् व्याघ्रः एव न आगतवान् एवं त्रीणि दिनानि अतीतानि। परन्तु व्याघ्रः एकं गृहम् आक्रान्तवान् तत्र एकं सुतं मनुष्यं गभीरतया आहतवान्।

तदा विजयः ग्रामस्थान् अवदत्। "व्याघ्रः अधुना मनुष्यरक्तम् आस्वादितवान् अस्ति। अधुना गोरक्तं नेष्यति। अतः व्याघ्रस्य कृते बडिशरूपेण कश्चन शूरपुरूषः आवश्यकः।

तदा ग्रामजनाः परस्परम् ऐक्षन्त। परन्तु ग्रामप्रमुखः स्मरन् अवदत्, "अरे सः सिंहबलः केवलं हस्तेनैव सिंहम् मारयितुं समर्थः अस्ति इति वदति। तर्हि बडिशरूपेण तस्य एव प्रयोगं कुर्मः वयम्।"

यदा सिंहबलः ग्रामीणानाम् कल्पनाम् अवागच्छत् तदा सः अतीव भयभीतः। सः उच्चैः आक्रोशत्, "अयं तु मम अवमानः एव। किं गोः स्थाने मादृशं वीरपुरुषं बडिशरूपेण बन्धयिष्यन्ति भवन्तः। तथापि ग्रामवासिभिः न किमपि श्रुतं तस्य। तेषां निश्चयः दृढः आसीत्। अतः निरुपायत्वेन सिंहबलः अङ्गीकृतवान्।

अधुना गोः स्थाने व्याघ्रम् आकर्षयितुं सिंहबलः उपविष्टः। धेनोः स्वबन्धनार्थम् उपयुक्ता रज्जुः तथैव भूमौ स्थितः आसीत्।

तदा सिंहबलः मार्गस्थान् लघुपाषाणखण्डान् उद्धृत्य विजयं प्रति प्रक्षिप्तवान्। "अरे किमर्थं मयि उपलान् क्षिपसि" इति क्रोधेन अपृच्छत् विजयः। "त्वं तु वृक्षस्याग्रे सुरक्षितः सुखेन तिष्ठसि। अकस्मात् निद्रावशः भवसि चेत् मम का गतिः स्यात्?" इत्यपृच्छत् सिंहबलः।

सिंहबलस्य वचनं श्रुत्वा विजयः कोपं नियन्तुम् अक्षमः वृक्षात् अवातरत्। धेनोः बन्धनार्थं तत्र आनीता रज्जुः आसीत्, तया रज्ज्वा सः सिंहबलमेव कठिना बद्धवान्। सिंहबलम् अवदच्च, "व्याघ्रः त्वां मारयिष्यति अथवा न परन्तु सम्यक् अवगच्छतु यत् इदृशीं मूर्खताम् आचरिष्यसि चेत् अहमेव तव प्राणान् हरामि।"

मध्यरात्रसमये द्वावपि श्रान्त्वा निद्राधीनौ जातौ। तदा निःशब्दतया व्याघ्रः सिंहबलम् उपागच्छत्। दैवशात् जागरितः सिंहबलः व्याघ्रम् अपश्यत्।

शनैः शनैः उपसर्प्य व्याघ्रः उत्प्लुत्य सिंहबलम् आक्रान्तवानेव । सः आक्रोशितुं धावितुं प्रयत्नं कृतवान् परन्तु सर्वे प्रयत्नाः विफलाः जाताः यतः विजयेन स्वयमेव रज्जुना सः बद्धः। अतः सः आत्मानं व्याघ्रात् रक्षितुं वृक्षं परितः एव पुनः पुनः मण्डलाकारं धावन् स्थितः।

आक्रोशध्वनिना बाधितः विजयः किञ्चित् कालानन्तरं जागृतः। सः सिंहबलस्य दुःस्थितिं दृष्टवान्। परन्तु एकक्षणमपि सः विरमेत् चेत् व्याघ्रः उत्प्लुत्य तं क्षणार्धात् कवलीकरोति। एवं स्थिते विजयः अपि भूरि चिन्तामग्नः जातः। कथम् अस्य सिंहबलस्य साहाय्य करणीयम् इति तेन न ज्ञातम्। यतः चले लक्ष्ये कथं वा बाणसन्धानं करणीयम् इति तस्य चिन्ता। अन्ततः एकः उपायः तेन चिन्तितः। सः सिंहबलम् अवदत्, ''मित्र, यदि क्षणं यावत् धावनात् विरमसि चेत् अहमपि बाणं सम्यक् लक्ष्यीकृत्य व्याघ्रं वेद्धुं शक्नोमि।'' परन्तु सिंहबलः धावनं न अत्यजत्। धावन्नेव सः आक्रन्दत्, 'यदि अहं अधुना विरमामि अवश्यं व्याघ्रस्य अन्नं भूत्वा प्राणैः वियुक्तः भविष्यामि।''

धावतोः तयोः एव अकस्मात् येन रज्ज्वा व्याघ्रः बद्धः सः रज्जुः व्याघ्रस्य पादयोः लग्ना भूत्वा व्याघ्रस्य द्वावपि पृष्ठपादौ रज्ज्वा बद्धौ।

अधुना पादबद्धः व्याघ्रः स्थानबद्धः अपि जातः । सः व्याघ्रस्य पृष्ठम् आरूढवान्। महता बलेन स्वहस्ताभ्यां व्याघ्रस्य ग्रीवां गृहीतवान्। ग्रामीणैः सिंहबलस्य आक्रोशः श्रुतः। तदा ते व्याघ्रारूढं सिंहबलं बलेन तस्य ग्रीवां कर्षन् दृष्टः। निर्भयतया व्याघ्रमेव वशीकृतवन्तं सिंहबलं



दृष्ट्वा ग्रामजनाः तस्य शौर्यं प्रशंसितवन्तः।

यद्यपि प्रशंसया आनन्दितः सिंहबलः तथापि सः विजयम् अवदत्, "विजय अहं व्याघ्रं बद्धवान् इति सत्यं परन्तु न कः अपि मयि विश्वसेत्। अद्य यावत् जनैः अहं वामनः इति मम उपहासः एव कृतः। अतः अहं प्रार्थये मित्र, यत् त्वमेव एनं व्याघ्रं राजसभां नय, पारितोषिकं च अवाप्नुहि।"

"मित्र सिंहबल, अहं तु पूर्वमेव राज्ञः कार्यालये उद्योगं करोमि। अतः न कोऽपि लाभः मम तत्र गत्वा। तथा च वस्तुतः त्वमेव स्वयं व्याघ्रं वशीकृतवान्। अतः त्वमेव व्याघ्रं राजानं प्रति नय। अनन्तरं सिंहबलः राजनगरं प्रति प्रयाणं कृतवान्। राजधानीं प्राप्य तत्र व्याघ्रं राजनम् उपहारीकृतवान्। सिंहबलं दृष्ट्वा राज्ञः अमात्यः कुशलबुद्धिः शङ्कां पृष्टवान् "महाराज, लघुमूर्तिः वामनः अयं मनुष्यः व्याघ्रं वशीकर्तुं समर्थः इति न प्रतिभाति। अतः एतं वृत्तं प्रत्यायितुं साक्षिणः अपेक्षिताः। प्रधानामात्यस्य इदं वचनं सिंहबलाय न अरोचत। सः अनुक्षणं प्रत्यवदत् "अस्ति राज्ञः कार्यालये कश्चन मनुष्यः विजयः नाम येन मम व्याघ्रग्रहणं साक्षीकृतम्। तदा प्रधानमन्त्री उच्चैः हसन् उक्तवान् "मम ज्ञानानुसारं राजकीयकार्यालये नः विद्यते कोऽपि कर्मचारी विजयः नाम।"

तदा एव राजा सभायाम् उत्थितवान्। तेन सभायां सर्वेषां हासः स्थगितः। तदा राजा अवदत्, "अहमेव सः विजयः। अहं स्वयम् अस्य शौर्यस्य साक्षीभूतः। अयि भोः जनाः। अयं युवा न केवलं शूरः अपि तू दयालुः अपि। हन्तुं शक्यः अपि व्याघ्रः अनेन दयया न हतः केवलं बन्धीकृतः। वयं तु सुशिक्षिताः सुसंस्कृताः मानवाः। तथापि एनं युवकं निर्दयतया अवमानयामः। वस्तुतः एषः अभिनन्दनीयः अस्माभिः"

अनन्तरं राजा सिंहबलं सेनायां प्रमुखाधिकारीरूपेण नियुक्तवान्।





# द्वौ पुत्रौ

बरवाणि राज्यस्य महाराजस्य एकमुखस्य द्वौ पुत्रौ आस्ताम्; सुमन्तः वसन्तः च। सः स्वस्य द्वावपि पुत्रौ गुरोः केदारस्य गुरुकुलम् अध्ययनार्थम् प्रैषयत्। राजा स्वस्य राज्यं विभज्य पुत्राभ्यां दातुम् इच्छति स्म। राजा गुरुं केदारमहाभागं तस्य पुत्राभ्यां नियतशिक्षणेन सहैव प्रशासकीयानि कौशलानि युद्धकौशलानि च अध्यापयितुम् अयाचत।

अथैकदा राजा एकमुखः स्वपुत्रयोः अध्ययनविषये गुरुम् अपृच्छत्। गुरुः उदतरत्, 'हे राजन्! अहम् द्वाभ्यामपि यथा भवता निर्दिष्टम् तथा प्रशासकीयानि कौशलानि युद्धकौशलानि च पाठ्यन् अस्मि। सुमन्तस्य प्रशासकीय- विषयेषु रुचिः अस्ति इति प्रतीयते। सः अतीव रुच्या प्रशासकीयतत्त्वानि अधीयानः अस्ति परम् एतेषु सर्वेषु विषयेषु वसन्तस्य तावान् रसः अस्ति इति न भासते मम। सः सृष्टिम् अवलोकयन् तस्याः चित्रम् आलिखन्नेव रममाणः भवति। तस्य कलाविषये अभिरुचिः अस्ति इति प्रतीयते।''

कतिपयदिनानन्तरं राजा एकमुखः वेषान्तरं कृत्वा चलन् गुरुकुलम् अगच्छत्। सः तत्रस्थानां छात्राणां सर्वाः गतिविधीः अवालोकयत्। गुरोः व्याख्यानानन्तरं ते छात्राः स्वरुच्यनुसारम् गतिविधिम् अचिन्वन् तदनुगुणम् कार्यं च आरभन्त। सुमन्तः धनुर्विद्यायाः अभ्यासं कुर्वन्नासीत् तथा च वसन्तः चित्रकलायां निमग्नः आसीत्। सः तान् छात्रान् मध्याह्नम् यावत् अवालोकयत्। गुरुः राजानम् अभ्यजानात् व्यजानात् च यत् सः छात्रान् परीक्षमाणः अस्ति इति।

राजा एकमुखः अवदत्, ''अहम् वसन्तस्य विषये चिन्ताक्रान्तः अस्मि यत् कथम् सः राज्यम्

एस्.एस्.श्रीनिवासः

सञ्चालयेत् रक्षेत् च यदि सः सक्षमः शक्तिमान् च न स्यात्?''

''मान्यवर! यथावकाशम् चिन्तयामो वसन्तस्य भवितव्यविषये।'' गुरुः अवदत्। भोजने सः राजानम् सुनवीनान् स्वादून् आम्रखण्डान् पर्यवेशितवान्।

राज्ञः कृते इतोऽपि केचन स्वादिष्टाः आम्रखण्डाः पुरतः स्थापिताः आसन्। राजा खादितुम् इतोऽपि कांश्चन आम्रखण्डान् मुखे अस्थापयत् परं निराशोऽभवत् यतः ते आम्रखण्डाः मधुराः नासन्। गुरुः राज्ञः मुखचर्यायां जातं परिवर्तनम् निरैक्षत अवदच्च, ''भवता लक्षितं किञ्चित्? मया भवते दत्तम् आम्रद्वयमपि एकस्यैव आम्रवृक्षस्य आसीत्। यद्यपि इदमाम्रद्वयम् एकस्यैवाम्रवृक्षस्य अस्ति तथा च दृश्यतेऽपि समानमेव तथापि पश्यतु कथं द्वयोरपि रुचिः भिन्ना; भवतः पुत्रौ अपि तथैव स्तः। तयोः प्रत्येकं पुत्रस्य अपि स्वस्य स्वतन्त्रा काचित् विशेषता अस्ति।''

गुरुः स्वस्य वचांसि अग्रे अनुवर्तयन् अवदत्, ''महाराज! भवान् यद्यपि बलेन वसन्तम् राजपदे नियोजयिष्यति तथापि तस्य प्रशासनम् सुचारु न भविष्यति। कोऽपि जनः तस्य इच्छायाः विरुद्धम्, यस्मिन् कार्ये रुचिः नास्ति तस्मिन् सुपरिणामम् साधयितुं कदापि न शक्नोति। यदि भवान् वसन्तस्य अभिरुचिं प्रोत्साहयिष्यति तर्हि सः एकः उत्तमः चित्रकारः कविः वा भवितुं शक्ष्यति। कृपया सुमन्तमेव अखिलस्य राज्यस्य राजपदे नियोजयतु एकः दक्षः राजा भवितुञ्च तस्य सहायतां करोतु।''

राजा एकमुखः गुरोः तैः वचोभिः चिन्तनार्थं प्रवृत्तः अभवत्। सः व्यजानात् यत् स्वस्य इच्छानुसारम् बलेन स्वपुत्राणांजीवननिर्धारणम् एषा तु सर्वथा मूर्खता एव भवेत्।

स्वपुत्रयोः विषये एकं निश्चितं निर्णयं कुर्वन् राजा एकमुखः राजप्रासादं प्रत्यागच्छत्।



# अनुरुपः वरः

चन्द्रहासः स्वपुत्र्या मेधया सह तस्याः भाविवरविषये चर्चितवान्। ''तात, भवदिच्छयां भवान् मदर्थं द्वौ विवाहयोग्यौ तरूणौ विचिनोतु। तयोः एकमहं वरयामि'' इत्युक्तवती रूपसम्पन्ना मेधा। अजयसुजयौ तौ द्वौ युवकौ आस्तां ययोः चयनं चन्द्रहासेण कृतम्। सुजयः पित्रोपार्जितस्य महत्सम्पत्तेः स्वामी आसीत्। अतः उपजीविकायै धनार्जनस्य तस्य आवश्यकता नासीत्। अजयः चित्रकारः आसीत्। उपजीविकायै सः स्वनिर्मितचित्राणि विक्रीणीते स्म। द्वयोरेकस्यापि दुरभ्यासः नासीत्। विवाहविषयेऽपि द्वयोरपि काऽपि विशिष्टा अपेक्षा नासीत्। तयोः विषये स्वपुत्र्याः मतं श्रुत्वा चन्द्रहासः ताम् उक्तवान्, ''सुजयः धनिकः वर्तते। तेन सह तव जीवनं सुखमयं भवेत्। त्वं तस्य चयनं कुरु'' इति। नकारं दर्शयन्ती मेधा उक्तवती, ''तात, अजयः एव भवतः योग्यः जामाता भवेत्।'' सा स्पष्टीकृतवती, ''तात, महत्सम्पत्तेः कारणात् सुजयः उपजीविकार्थं किमपि कार्यं न करोति। कालेन तत् धनं समाप्स्यति। तदा सर्वदा सुखोपभोगस्य अभ्यासवशात् सः अग्रे उपजीविकार्थं कष्टं सोढुं न शक्नुयात्। तदेव मदर्थं कष्टदायकं भवेत्।'' तदनन्तरं चन्द्रहासः उक्तवान्, ''किन्तु यदि त्वम् अजयं वृणोषि तदा तु आरम्भतः एव तव जीवनं कष्टमयं भवेत् किल?'' इति। ''न, तथा नास्ति तात। मया अजयस्य चित्राणि दृष्टानि। सम्यक् उत्साहवर्धनेन सः इतोऽपि उत्तमचित्राणि निर्मातुं शक्नोति। अल्पे एव काले सम्पत्तिः प्रसिद्धिश्च प्राप्स्यते। न केवलम् एतावत् अपि तु कलाकारः स्वभावतः एव संवेदनाशीलः भवति। सः उत्तमः भर्ता भविष्यति इति निश्चयेन वक्तुं शक्नोम्यहम्'' इत्युक्यवती मेधा। मेधया दत्तेन स्पष्टीकरणेन व्यक्तित्त्वस्य विवरणेन च चन्द्रहासः अनुमतः जातः।

*- जे. मर्टिन् फिन्ले*






# शिथिलालय: - २९

*(रात्रौ निबिडान्धकारे वृश्चिकजातीया: शिखिमुखिन: दलं बन्दीग्राहम् अगृह्णन्। तस्य जाते: नेतु: मुखात् उन्मत्तखदिरफलस्य वर्णनं श्रुत्वा नागसोम: तदन्वेष्टुं रहसि एव तत: पलायित:, खदिरवृक्षस्य स्थानं प्राप्य तद्रक्षकं हस्तपादबन्धनेन नियतवान्। नागसोमेन कस्यस्वित् शिलाखण्डस्य पृष्ठत: क्षिप्त: मोचनार्थं चेष्टमान: रक्षक: यत्र शिखिमुख्यादय: सुप्ता: आसन् तस्मिन्नेव पार्श्वे पर्वतात् अध: न्यपतत्।)*

**गु**हाया: निद्रित: वृश्चिकनेता गुहामुखे च तन्द्रीरता: शिखिमुखिन: अनुचरा: पर्वतात् अध: पतत्या: शिलाया: भीषणं रव: श्रुत्वा भयविह्वला: अभवन्। शिलया सह रक्षकोऽपि अधोऽधो पतति स्म। भूकम्पनात् पर्वतशिखरमेव स्वस्थानभ्रष्टं सत् अध: पतति इति तै: चिन्तितम्। शिखिमुखी स्वानुचरान् उत्थाप्य सावधानान् भवितुम् असूचयत्। तावदेव वृश्चिकनेता सचापल्यं धावन् गुहाया: बहि: आगत:।

"इत: दूरं पलायत यूयं सर्वे! अयं हि भूकम्प:। न पलायिष्यध्वे चेत् नि:संशयं मरिष्यथ:" इति वृश्चिकनेता आक्रोशत्।

नेतु: सूचनानुगुणं सर्वे यावत् पलायितुम् उद्युक्ता: तावदेव भीमध्वनिना सह शिलाखण्ड: तमनु च रक्षक: भूमौ पतितौ। सुदैवात् शिलाखण्ड: तत्र पतित: यत्र कोऽपि मनुष्य: नासीत्। रक्षकस्तु क्रन्दमान: तज्जातीययो: द्वयो: जनयो: न्यपतत्।

वृश्चिकजाते: नेता पर्वतात् अध: पतित्वा

**दासरि सुब्रमण्यम्**




वेदनया विह्वलमानं रक्षकं दृष्ट्वा तत्समीपं च गत्वा अपृच्छत्, ''अरे, किं जातम्? तव हस्तपादाः केन बद्धाः?''

रक्षकः वेदनया कम्पमानः कथञ्चित् उत्थाय अवदत्, ''ये इभ्यजातीयाः अस्माभिः बन्दीग्राहं गृहीताः तेष्वेव अन्यतमेन गुप्ततया मयि आक्रमणं कृत्वा मम हस्तपादाः बद्धाः। एनां वार्तां कथयितुम् अहं पर्वतात् अधःपतनमपि सोढ्वा अत्र आगतोऽस्मि।'' रक्षकस्य वचनं श्रुत्वा वृश्चिकनेता, शिखिमुखी विक्रमकेसरी चापि आश्चर्यम् अनुभूतवन्तः। शिखिमुखी सकृत् तस्य अनुचरेषु दृष्टिं प्रसार्य अजानात्, यत् तेषु नागसोमो न दृश्यते। नागसोमस्य अनुपस्थितिं सः यावत् विक्रमकेसरिणे कथयितुम् ऐच्छत् तावदेव भावनावेगेन वेपमानः वृश्चिकनेता अपृच्छत्, ''कथयत, युष्मासु कः उन्मत्तखदिरफलम् अन्वेष्टुं गतोऽस्ति? यद्यपि सः धैर्येण तत्फलं प्राप्य खादिष्यति तथापि विपदा ग्रस्तो भविष्यति। अधुना किं कर्तव्यम्?''

''अधुना तु अस्माभिः शीघ्रमेव नागसोमस्य अन्वेषणं कृत्वा फलखादनात् सः निवर्तनीयः। परं तत्फलखादनेन का नु खलु हानिः भवेत्?'' शिखिमुखी अपृच्छत्।

वृश्चिकजातेः नेतारं विहाय नान्यः कोऽपि तत्फलं खादित्वा जठरे जरयितुं न शक्नोति।'' अहं दिनद्वयात् प्राक् मया बन्धने स्थापितं शिखावन्तम् अर्चकं तत्फलं खादयित्वा शिथिलालयविषये सत्यं वाचयितुम् ऐच्छम्,'' वृश्चिकनेता अवदत्।

तच्छ्रुत्वा शिखिमुखी वृश्चिकनेतारम् अवदत्,'' नागसोमः अस्मान् वञ्चयित्वा उन्मत्तखदिरफलस्य अन्वेषणार्थं न गतः। अस्य प्रदेशस्य भिन्नैः जलवाय्वादिभिः तस्य चित्तं भ्रमितं सञ्जातम्। वयं तु युष्माकं मित्राणि। अतः शिथिलालस्य गवेषणार्थं वयं युष्माकं सर्वविधं साहाय्यम् आचरामः। चलत, वयं प्रथमं नागसोमम् अन्विष्यामः।''

''यदि नागसोमः उन्मत्तखदिरफलं खादितवान् स्यात् तर्हि तमेव अहं वृश्चिकमात्रे बलिं करोमि'' इति वृश्चिकनेता तस्य अनुयायिनः

अवदत्। ततः शिखिमुखी अवदत्, "चलत शीघ्रम्! यावत् सः फलं खादित्वा आपद्ग्रस्तो न भवति तावदेव तम् अन्विष्यामः" इति।

सर्वेऽपि जनाः वृश्चिकनेतारमनु कासारतीरे स्थितान् उन्मत्तखदिरवृक्षान् प्रति प्रस्थिताः। परं ततः प्रागेव नागसोमः वृक्षमारुह्य एकं फलं खादितवान् आसीत्। खादनादनन्तरं नातिचिरेण मदः प्रादुर्भूतः। फलखादनस्य परिणामः दृग्गोचरः जातः। परितः वर्तमानाः सर्वे वृक्षाः पर्वताः परिभ्रमन्ति इति क्षिप्तचित्तस्य तस्य नागसोमस्य भाति स्म।

"अहो, अहं उन्मत्तखदिरफलम् अखादम्। तेनाहम् उन्मत्तो भवामि। अस्याम् उन्मत्तावस्थायामेव अहं भूगर्भे स्थितस्य शिथिलालयस्य स्थानं ज्ञातुं शक्नोमि। अपि शिथिलालयः वृश्चिकमातुः मन्दिरं च समानमेव? अहो! तत्र हि खलु विद्यते शिथिलालयः। तदेव च वृश्चिकमातुः मन्दिरम्!!" इति वदन् मत्तावस्थायाम् आक्रोशन् केशान् च नखैः निकृन्तन् पर्वतीयमार्गेण विशिष्टदिशि अधावत्।

नागसोमं ग्रहीतुं शिखिमुखिनः दलं तम् अन्वधावत्। पर्वते मदोन्मत्तावस्थायां धावतः तस्य आक्रोशः एव तैः श्रूयते स्म, न तु सः कस्यापि दृष्टिपथं गच्छति स्म। सूर्योदयं यावत् नागसोमस्य रवम् अनुगच्छन्तः ते तस्य गवेषणार्थं प्रायतन्त, परम् अन्ततो गत्वा असिद्धार्थाः ते श्रान्ताः वृक्षमूलानि समाश्रयन्त।




यस्य कासारस्य तीरे उन्मत्तखदिरस्य वृक्षाः आसन् तस्मात् कासारात् नातिदूरम् एकं वनम् आसीत्। तस्मिन्नेव शिथिलालयार्चकस्य अनुयायिनः वृश्चिकजातीयानां लघुचम्वाः बन्धने आसन्। अर्धरात्रे अर्चकेण नागसोमस्य आक्रोशः श्रुतः। तदाकर्ण्य अर्चकः झटिति शबरगृध्रम् अन्यान् च अनुयायिनः सावधानान् कृत्वा वृश्चिकजातिदलम् अवदत्, तस्मिन् आक्रोशति जने वृश्चिकमाता आविर्भूता, "अयं नागसोमः न सामान्यः। सः महान् भक्तोऽस्ति। सः सर्वथा विश्वसनीयः। तम् अनुसृत्य वयं वृश्चिकमातुः मन्दिरं द्रष्टुं शक्नुमः। चलत! कालं वृथा मा यापयत!"

वृश्चिकजातीयाः ऋजुस्वभावाः आसन्। अतः

ते तस्य वचने विश्वस्य नागसोमस्य अन्वेषणार्थं प्रस्थिताः। सूर्योदये आसन्ने तैः कस्यास्विद् गुहायाः पुरतः नागसोमः दृष्टः। गुहाद्वारि ऊर्णनाभस्य जालम् आसीत्। तस्मिन् कश्चन राक्षसाकारः वृश्चिकः बद्धः सन् आत्मानं मोचयितुं प्रयतते स्म।

नागसोमः हस्ते कृपाणीं धृत्वा इतस्ततः धावन् आक्रोशति स्म, त्रायध्वं, मां परित्रायध्वम्! अयं भयङ्करः जन्तुः मां निगलितुम् आयाति!

नागसोमस्य मदोन्मत्तवत् आचरणं वीक्ष्य 'अनेन उन्मतखदिरफलं खादितम् अस्ति' इति ऊहा अर्चकेण कृता। वृश्चिकजातीयानां मत्यनुगुणम् अधुना अस्य उन्मत्तस्य साहाय्येन शिथिलालयस्य स्थानं ज्ञायेत इति आशा अर्चकस्य मनसि समुत्पन्ना।

अर्चकः तम् उन्मत्तं नागसोमम् उपसृत्य अवदत्, "त्वम् इभ्यजातीयः खलु? अहं त्वां गोलभराग्रामे अपश्यम्। तव नाम नागसोमः खलु?"

अर्चकस्य शब्दं श्रुत्वा चकितः नागसोमः तं प्रति मुखं कृत्वा अवदत्, "हे शिखाधारिन् महात्मन्! कोऽस्ति भवान्? कश्चन सिद्धः इव प्रतिभाति मे भवान्। एतस्मात् दुष्टजन्तोः मा रक्षतु! अहं भवतः उपकारान् न कदापि विस्मरामि," इत्युक्त्वा नागसोमः भावावेगेन अर्चकस्य पादयो न्यपतत्।




अर्चकः नागसोमम् उत्थाप्य अवदत्, "नायं साधारणः जन्तुः द्विशिरस्कः सपक्षः नागोऽयम्। तथापि भयं मास्तु। एनम् अहं लीलया मारयामि," इति उक्त्वा सः शबरगृध्रम् आदिशत्, शबरगृध्र! एनां पिशाचिनीं। जहि!"

अनुक्षणं शबरगृध्रेण खड्गेन वृश्चिकः प्रहृतः। द्विधा विभक्तः सः अधः न्यपतत्। तस्य रक्तेन च ऊर्णनाभजालं क्लिन्नम् अभवत्। नागसोमः रक्तं दृष्ट्वा पुनरपि भृशं भयम् अनुभवन् अर्चकपादयोः अपतत्, अवदच्च, "महान् अयं रक्तप्रवाहः। अत्र तु रक्तस्य नदी एव प्रवहति इति भाति। अहं रक्तप्रवाहे वहामि। तरितुं न शक्नोम्यहम्। कृपया मां तारय! त्वं तु सिद्धोऽसि।"




मा पलायताम् इत्यत्र अपि अस्माकं ध्यानं भवतु, सतर्का: भवन्तु तद्विषये।'' इत्युक्त्वा अर्चक: नागसोमम् अन्वसरत्।

नागसोम: शिलाखण्डान् गुल्मान् च उल्लङ्घ्य मत्तावस्थायां जवेन मार्गम् आक्रमति स्म। अन्ये जना: मार्गक्रमणे महत्कष्टं सोढ्वा कथञ्चित् तम् अनुसरन्ति स्म। उन्मतखदिरफलरसेण नागसोमस्य मस्तिष्के विचित्र: परिणाम: कृत:। तस्मादेव कारणात् लघुगात्रकम् अपि प्राणिनं स: उन्मना: पर्वतप्रायगजवत् भावयति स्म अनुक्षणम् चाक्रोशति स्म, ''सिद्धगुरो पालय माम्!'' इति।

शिथिलालयार्चक: तस्य मस्तके शनकै: परामृशन् अवदत्, ''वृथा भयं मास्तु। मम सामर्थ्यं न जानसि त्वम्। एनं महान्तं रक्तप्रवाहं अहं लघुनिर्झररूपेन परिवर्तयामि। त्वं तेन निर्झरमार्गेन भूगर्भस्थितं शिथिलालयं प्रति गच्छ!''

''यथा आदिशति सिद्धगुरु:!'' इत्युक्त्वा नागसोम: वेगेन मार्गे चलितुमिव अग्रे असरत्।

अर्चक: स्वानुचरान् आदिशत्, ''चलतु शीघ्रम्। एनं नागसोमम् अनुसराम:। एनम् अनुसृत्य अस्माभि: लक्ष्यं प्राप्तव्यम्। शिथिलालयस्य स्थानं तु वयं न जानीम:। प्राय: अयम् उन्मत्त: अस्मान् शिथिलालयं प्रापयेत्। परं एष: अस्माकं हस्तात् च्युत: सन्

अपराह्ने सर्वेऽपि जना नागसोमम् अनुकश्चन पर्वतशिखरं प्राप्तवन्त:। अध: काचन दरी दृश्यते स्म। तस्यां दर्यां लक्षधिकपर्णा: उन्नता: वटवृक्षा: आसन्।

नागसोम: सकृत् दरीं प्रति दृष्टिं क्षिप्त्वा नखै: केशान् निकृन्तन् अवदत्, ''सिद्धगुरो, शिथिलालय: तस्यां दर्याम् अस्ति। अहो! महत् खलु सुवर्णराशे: वैपुल्यम्! अहो अगणितानि रत्नानि!! अहो मन्दिरशिखरे वर्तमानस्य सुवर्णकलश: तेज:!!!''

अर्चक: अपि दर्यां दृष्टिं प्रासारयत्। परं स: किमपि द्रष्टुं नाशक्नोत्। केवलं दीर्घै: अवरोहै: युता: वटवृक्षा: तस्य दृष्टिपथम् आयाता:।

अस्य मूर्खस्य निरर्गलः प्रलापोऽयम्। एतावन्तं समयं यावत् अयं नीचबुद्धिः अस्मान् निबिडे वने उत्तुङ्गे पर्वते च भ्रमणेन पीडितवान्। अस्यामेव दर्याम् एनं क्षिपामि चेत् कष्टात् मुक्तिं प्राप्नोामि, नागसोमस्य जल्पनेन क्रोधाविष्टः अर्चकः अब्रवीत्।

अर्चकवचनं श्रुत्वा शबरगृध्रः अनुक्षणम् अवदत्, गुरुदेव, आदिशतु! किमेनं मूर्खं दर्यां क्षिपामि उत खड्गेन छिनद्मि? इति वदन् सः खड्गम् गृहीतवान्।

अनुक्षणं वृश्चिकजातीयेषु कलकलः समुत्पन्नः। पाषाणकुठारं उद्धृत्य ते अवदन्, "अस्य इभ्यजातीयस्य न कापि क्षतिः भवेत्। अयं वृश्चिकमातुः सेवकः। प्रायः अस्य कथनानुगुणं अस्यामेव दर्यां वृश्चिकमातुः मन्दिरं स्यात्।"

तदा किमपि वक्तुम् उद्युक्ते अर्चकः शबरगृध्रः हस्तौ पक्षवत् चालयन् उच्चैः अवदत्, "सत्यमेतेषां वचनं गुरुदेव! किमहम् आकाशमार्गेण दर्याम् अवतरामि?"

अर्चकः शबरगृध्रं तर्जयन् अवदत्, "त्वया प्रायः मदिरा पीता स्यात्। अत एव वृथा प्रलपसि। निगृहाण स्वजिह्वाम्। अन्यथा त्वां मर्कटं कृत्वा एकाकिनं च अत्र स्थापयित्वा इतः गच्छामि।"

प्रसीदतु गुरुदेवः! एवं कठोरदण्डनं मास्तु। अस्मिन् वने वृक्षशाखासु वासः सोढुम् अशक्यः,




शबरगृध्रः अवदत्।

एवं भाषमाणे शबरगृध्रे शिथिलालयार्चकः आश्चर्ययुक्तस्वरेण अवदत्, अयं दास्याः पुत्रः शिखिमुखी अत्र कथम् आगतः?

शिखिमुखी शिलाखण्डे स्थित्वा अर्चकम् उद्दिश्य च अवदत्, 'रे दुष्ट! चिरेण पुनरपि हस्तगतोऽसि अस्माकम्। अधुना पलायितुं प्रयतसे चेत् तव पृष्ठं शरेण वा कुन्तेन वा विद्धं भविष्यति।"

अर्चकः कञ्चन पलायनोपायम् अचिन्तयत्। सः झटिति नागसोमम् उत्थाप्य स्वस्कन्धे च स्थापयित्वा शिलानां पृष्ठतः सत्वरं पलायितः।

परं अयं तस्य उपायः सुकरः नासीत्।

शिखिमुखिविपदम् अनुवर्तमाना अन्या विपद् तेन सम्मुखीकर्तव्या आसीत्। येन मार्गेण सः पलायनं कर्तुकामः आसीत् तेनैव मार्गेण खञ्जः जाङ्गलः आयातः आक्रोशत् च, नीचमते! नाधुना पलायितुं शक्नोषि इत्युक्त्वा जाङ्गलः अर्चकम् आक्रामत्।

अर्चकः नागसोमम् अधः स्थापयित्वा कटिबद्धां कृपाणीं निष्कास्य जाङ्गलं उरसि प्रहर्तुम् ऐच्छत्। परं तावतैव जाङ्गलः अर्चकस्य शरीरे उदपतत्, तेन सा कृपाणी जाङ्गलस्य स्कन्धे लग्ना। कृपाण्या जातां क्षतिम् अविगणय्य जाङ्गलः अर्चकं कण्ठे अगृह्णात्। परम् अर्चकः शिरः परावर्त्य अनमत् येन अर्चकस्य शिखैव जाङ्गलस्य हस्तगता अभवत्।

जाङ्गलस्य क्षतेः रक्तं प्रवहति स्म। तथापि अर्चकः शिखां गृहीत्वा तम् आकर्षति स्म। अस्मिन् द्वन्द्वयुद्धे 'अहम् अधुना दर्यां पतामि' इत्येषा भीतिः अर्चकस्य मनः आवृणोत्।

तस्मिन् समये शिखिमुखी धावन् तत्र सम्प्रातः अवदच्च, " जाङ्गल! प्रशंसनीया खलु त्व स्वामिभक्तिः! एषः दुष्टार्चकः दर्यां पतिष्यति। अस्य कर्षणेन रक्षणार्थं बलव्ययेन किं प्रयोजनम्? अन्यच्च शबरनेतृपुत्री नागमल्ली अस्य शिखामेव इच्छति! इत्युक्त्वा शिखिमुखी खड्गेन अर्चकस्य शिखां कर्तितवान्। अनुक्षणम् अर्चकः हृदयद्रावकम् आक्रोशं कुर्वन् दर्यां न्यपतत्।

अत्रान्तरे नागसोमः कुत्र कीदृश्याम् अवस्थायां च वर्तते इत्यत्र कस्यापि ध्यानं नासीत्। अर्चकेण स्वस्कन्धात् अवरोहिते सति सः एकदृष्ट्या दरीस्थितवटवृक्षान् पश्यन् आसीत्। तदा तेन दर्यां पततः अर्चकस्य आक्रोशः श्रुतः। तदाकर्ण्य सोऽपि आक्रोशत्, " पश्यत, पश्यत!! तत्रैव शिथिलालयो विद्यते।" इत्युक्त्वा सः दर्यां वर्तमानान् वटवृक्षान् प्रति तूर्णमेव अधावत्। ***(अनुवर्तिष्यते)***



# मुग्धा स्नुषा

एका नववधू: प्रथमेव श्वशुरगृहम् आगच्छत्। भल्लातक-फलेभ्य: सा अतीव अस्पृहयत्। सा नित्यं भण्डारगृहम् गत्वा भल्लातकफलानि खादति स्म। यदा यदा सा अवसरं लभते स्म, तदा तदा सा भल्लातकफलं खादति स्म। एवं बहुदिनानि अतीतानि। श्वश्रो: मनसि संदेह: उत्पन्न: यत् 'एतस्मिन् गृहे स्नुषाया: ऋते न अन्य: कोऽपि भल्लातकफलं खादति?'

स्नुषया अवगतं यद् श्वश्रा तस्या: चौर्यविषये ज्ञातम् इति। एकस्मिन् दिने सा गृहे संमार्जनं कुर्वती आसीत्। भूमौ भल्लातकफलं पतितम् आसीत्। तद् गृहीत्वा तं प्रति आश्चर्येण दृष्ट्वा सा श्वश्रुम् अपृच्छत्, 'आर्ये! किमेतद्?' तच्छ्रुत्वा श्वश्रु: अचिन्तयत्, ''अहो मुग्धा एषा मम स्नुषा! एतया तु भल्लातकफलमेव न दृष्टं कदापि। वृथा शंकिता सा मया। एतद् चिन्तयित्वा पश्चात्तापम् अनुभूतवती।





# पितामहस्य रुचिरा कथा

पितामहः ताराङ्किते गगने सुखासन्दे उपविष्टः आसीत्। जिघ्रातिर्नी वामहस्ते गृहित्वा तेन एकः श्लोकः पठितः।

मन्त्रः कार्यानुगो येषां
कार्यं स्वामिहितानुगं।
त एव मन्त्रिणो राज्ञां
न तु ये गतपल्लवाः।।

पितामहं परितः उपविष्टाः बालकाः पृष्टवन्तः ''पितामह, कः एषः श्लोकः? कश्च अस्ति श्लोकस्य अर्थः?''

''कथयामि, शृण्वन्तु-

'यः मन्त्री अस्ति तेन नृपानुकूलं भूत्वा कार्यं करणीयम्। यः एवं कर्तुं न शक्नोति सः सचिवः एव नास्ति' अयम् एतस्य अर्थः'' उक्तवान् पितामहः ।

''तात, कः राजा कः च मन्त्री? तात, श्रावयतु एतां कथाम्'' प्रत्येकेन बालकेन एकैकः प्रश्नः पृष्टः।

''अस्ति कस्मिंश्चित्काले सुदर्शनः नाम महाराजः चक्रपुर-राज्यस्य। तस्य राज्ञः एकः मन्त्री अवर्तत। नाम आसीत् बुद्धिसिन्धुः। अयं मन्त्री अतीव चतुरः। अतः नृपः तु तं प्रशंसति स्म एव परं प्रजाजनाः अपि तस्य प्रशंसां कुर्वन्ति स्म।

किन्तु राज्ञः एकः चित्ततरङ्गः (छन्दः) आसीत्। सः दैवज्ञान् आहूय भविष्यविषये ज्ञानं प्राप्नोति स्म।

एकदा एकः ज्यौतिषिकः राजानम् उपगम्य

सी.शेषाद्रिः

स्वबुद्धेः तथा चातुर्यविषये अतीव प्रशंसां कृतवान्। नृपाय अपि सः अतीव अरोचत। सः तं ज्यौतिषिकं स्वकुण्डलीं दर्शयित्वा अपृच्छत्- ''मम आयुः इतोऽपि कियत् अस्ति इति कथयितुं भवान् शक्नोति वा''?

तदा नाक्षत्रिकः उक्तवान्-'देव अद्यतः षट्मासाननतरं भवतः आयुः समाप्तं भविष्यति। कथनविषये अहं किमपि न गूहे।''

एतत् श्रुत्वा भूपः चिन्ताकारणात् व्यथितः जातः। सः अन्नजलं त्यक्तवान्। पर्यङ्कम् आश्रितवान्।

''हन्त, षट्मासाभ्यन्तरे मम जीवनं समाप्तं भविष्यति'' इति चिन्तया सः शुष्यन् गतः।

एतत् सर्वं पश्यन् मन्त्री तं दैवज्ञं दृष्ट्वा क्रुद्धः सञ्जातः। सः नृपम् अगदत्- ''महाराज, भवता दैवज्ञेषु विश्वासः न करणीयः। वसिष्ठः इव महान् ऋषिः रामस्य राज्याभिषेकस्य मुहूर्तं निश्चितवान् परं किम् अभवत्- तस्मिन्नेव मुहूर्ते रामः वनवासं तु गतवान् एव किन्तु स्वपत्नीमपि त्यक्तवान्। एते दैवज्ञाः एवमेव किमपि वदन्ति।''

परं नृपस्य व्याधिः न अपगता। तदा मन्त्रिणा किं कृतं, जानन्ति भवन्तः? दैवज्ञमाहूय सः उक्तवान्-''भवता नृपस्य आयुः कथितं किन्तु स्वायुर्विषये किं चिन्तयति भवान्?''

तदा दैवज्ञः उक्तवान्,''महाभाग, अहम् इतोऽपि चत्वारिंशत्-वर्षाणि यावत् जीविष्यामि''

''हं एवमस्ति? मन्त्रिणा तत्क्षणे एव तस्मै दैवज्ञाय मृत्युदण्डः दत्तः तस्य शिरच्छेदः च कृतः। तेन नृपस्य व्याधिः नष्टा एव अभवत्। तेन सह तस्य ज्योतिषविषयकः छन्दः अपि नष्टः। सः आनन्देन शासनं चकार।



# नास्ति मे किमपि अपहरणीयम्

**क**स्मिंश्चित् नगरे आसीत् कोऽपि दरिद्र:। 'अन्यत् नगरं गत्वा उदरभरणस्य कमपि मार्गम् अन्विष्यामि' इति विचिन्त्य स: सार्थवाहानां सङ्घे आत्मानं योजितवान्। तस्मिन् सङ्घे पञ्चशताधिका: शकटिका: आसन्। सर्वे सार्थवाहा: यात्रायाम् एकस्यां रात्रौ कस्मिंश्चित् वने स्थिता:। तं दरिद्रं मनुष्यं त्यक्त्वा सर्वेऽपि वाहका: निद्राधीना: सञ्जाता:। स: एकाकी निवेशस्थानं परित: भ्रमन् एव आसीत्।

केनचित् कालेन केचन लुण्ठका: तस्य सङ्घस्य धनं चोरयितुं मध्यरात्रौ तस्य उपस्थिता:। किन्तु तं पुरुषं जागरितं दृष्ट्वा ते निर्गता:। ते एवं द्विवारं धनं चोरयितुम् आगता: परं स: तु इतोऽपि न सुप्त:। अन्ततो ते अन्तिमवारं पुनरागता: किन्तु स: पुरुष: शिबिरस्थानम् अभित: भ्रमन् एव आसीत्। स्वहस्तात् काष्ठादयान् पाषाणान् च भूमौ क्षिप्त्वा ते चोरा: आक्रोशन्,"एतेन मानुषेन अस्मत् भवतां रक्षणं कृतम्। तेन सह सम्यक् व्यवहरन्तु" इत्याक्रोश्य ते निर्गता:।

तदाक्रोशम् आकर्ण्य अन्ये पथिका: जागरिता:। भूमौ पतितान् काष्ठपाषाणान् दृष्ट्वा तै: पृष्टम्,"किं चोरा: अत्र आगता: आसन्?" तेन पुरुषेण 'आम्' इति उक्ते सति पुन: अन्यै: पृष्टं,"किं भवान् चौरेभ्य: भयं नानुभूतवान्?"

"चोरेभ्य: किमर्थं बिभेमि? नास्ति मत्समीपे तादृशं यत् चोरा: अपहरेयु:" इत्युक्तवान् स:।





# जीवने सन्तोषः

पुरा नगर्यां शिबिः कश्यपः चेति द्वौ सुहृदौ न्यवसताम्। तौ समवयस्कौ आस्ताम्। एकस्यामेव शालायाम् अपठताम्।

शिबिः आसीत् कृषकपुत्रः। तस्य कृषिकार्ये एव रुचिः। उच्चशिक्षणं लब्ध्वापि सः ग्रामें कृषिकार्यमेव कुर्वन् आसीत्। तस्मात् लभ्यमाना परिमिता धनप्राप्तिः कुटुम्बस्य पोषणार्थं पर्याप्ता अवर्तत।

कश्यपः वणिक्कुटुम्बे जातः। बाल्यादारभ्य सः अनौपचारिकदृष्टचा व्यवसायशिक्षणं प्राप्तवानेव। स्वजनकस्य कार्यं दृष्ट्वा तेन व्यवसायः विज्ञातः तस्य कूटोपायाः आपि ज्ञाताः। विमृश्य निर्णयं कुर्वन् सः प्रतिद्वन्द्विनाम् अपेक्षया अग्रे गतवान्। कुशलतया तेषां निर्णयानां सम्यक् अग्रनिरूपणं कृत्वा तेभ्यः परतरान् उपायान् कृतवान्। इत्थं तस्य व्यापारः विस्तारं गतः। केषुचित् ग्रामेषु मर्यादितः तस्य व्यापारः प्लुतगत्या वर्धमानः राजधानीं अपि प्राप्तः ।

उभौ शिबिः कश्यपः च स्वकुटुम्बस्यैव व्यवसायान् अनुसृतवन्तौ। एतस्य कारणं पृष्टौ तौ "स्वकुलस्य व्यवसायः एव श्रेष्ठः। आवां तं सफलतया अग्रे नेतुं समर्थौ इति आवयोः विश्वासः" इति प्रत्यवदताम् ।

कश्यपः शिबिः च बहुधा मिलित्वा परस्परं कुशलप्रश्नान् कुरुतः स्म। शिबिना सर्वदा उक्तं यत् यावत् तेन प्राप्तं तस्मात् सः सन्तुष्टः अस्तीति। इतोऽपि अधिकं सः न ऐच्छत्।

कश्यपः तम् उपदिष्टवान् "प्रिय मित्र, तव स्वकीया क्षेत्रभूमिः परिमिता एव। अत्र

एन्. उमामहेश्वरराव:



धनस्य व्ययः अनिवार्यः। तथापि शिबिः यथा कथंचित् आयमर्यादायां जीवन् आसीत्।

प्रत्युत कश्यपः तु महान् श्रेष्ठी जातः। सुदूरं विस्तृतं व्यवसायं निर्वहन् सः प्रभूतां सफलतां लब्ध्वा समाजे गौरवं प्राप्तवान्।

एकदा कश्यपस्य अन्यस्य कस्यापि बालमित्रस्य गृहे उत्सवः आसीत्। तस्मिन् उपस्थातुं सः नगरीम् आगतः। ततः सः शिबिना मेलितुं तस्य गृहं गतवान्। शिबेः तस्य कुटुम्बस्य च कुशलं पृष्टवान्। शिबिः बहु समाधानेन स्वस्य गृहस्थितिं निवेदितवान् सुहृदे। परन्तु कश्यपः स्वयं दृष्ट्वा अवगतवान् यत् ।

शिबेः धनागमे वृद्धिः नासीत्। तयोः बाल्यकाले या स्थितिः आसीत् तथैव स्थितिः अद्यापि अवर्तत तस्य गृहस्य गोधनस्य क्षेत्रभूमेः च। एतावत्सु वर्षेषु तस्य सम्पत्तिः न वर्धिता। यद्यपि कन्ये सम्यक् अध्यापिते तेन , तथापि न तद् शिक्षणम् आधुनिकम्।

ग्रामे या व्यवस्था आसीत् तावदेव शिक्षणं दत्तम्। बुद्धिमतीभ्यां कन्याभ्यां इतोऽपि नवीनतरं व्यावसायिकं शिक्षणं दातुं शक्यम् आसीत्। एतत् दृष्ट्वा कश्यपः चिन्ताकुलः जातः।

तेन शिबिः पृष्टः "तव परिवारजनैः पर्याप्तम् अन्नं लभ्यते न वा? कन्ययोः शिक्षणं कथं प्रचलति?"

शिबिः उक्तवान् "अस्माकं समीपे यदस्ति तेन वयं सुखिनः स्मः। यत् दातुं समर्थः अहं

यावदपि श्राम्यसि चेत् कः लाभः? काश्चित् अधिकां स्वीकृत्य कृषिकार्यं किमर्थं न करोषि? अथवा क्षेत्रस्वामिना समयं निधाय सस्यसंग्रहात् तस्मै भागं देहि। ऋणमिच्छसि चेत् मत्तः ग्रहीतुम् अर्हसि। आवश्यकं चेत् निःसंकोचं मां पृच्छ।"

किन्तु शिबिः प्रतिवदति स्म "अहं सन्तुष्टः अस्मि। मदीयां क्षेत्रभूमिं कृष्ट्वा यत् लभ्यते तत् पर्याप्तम्। मम अधिकस्य लोभः नास्ति। समयाधीनाम् अन्यभूमिं प्राप्य कृषिकार्यं कर्तुं न इच्छामि।

एवं दशवर्षाणि अतीतानि। शिबेः द्वे कन्ये जाते। कन्ययोः अन्नवस्त्रशिक्षणादिकस्य तथैव अन्यप्रयोजनानां व्यवस्था करणीया। तदर्थं

तादृशं शिक्षणं मम कन्याभ्यां लभ्यते। अहं सन्तुष्टः।''

तत् श्रुत्वा कश्यपः उच्चैः हसितवान्। तेन उक्तम् ''चातुर्येण उत्तरं दत्तम् त्वया।''

सम्भ्रान्तेन शिबिना पृष्टम् ''किमस्ति चातुर्यमत्र? वस्तुस्थितिं कथयामि तुभ्यम्।''

तदा कश्यपः अवदत् ''प्रिय सुहृद् , अहं त्वां बाल्यात् जानामि। त्वं न केवलं बुद्धिमान् अपि तु उदात्ताः तव विचाराः। जीवने लभ्यमानात् सन्तोषः अनुभवितव्यः इति त्वया बाल्यात् प्रभृति अनुवर्तितम्। किन्तु अत्रैव तव दोषः। लुब्धेन न भवितव्यम् , अतिलोभः न कर्तव्यः इति सत्यम्। किन्तु सर्वदा यावत् लभ्यते तावता एव तुष्टिः इति अल्पसन्तुष्टता अपि मास्तु। किन्तु स्वस्य जीवने सुसिद्धिं प्राप्तुं सम्पत्तिः न वर्धितव्या इति अपि अयोग्यम्। मनुष्येण सर्वथा स्मृद्धिं प्राप्तुं प्रयत्नाः कर्तव्याः।

तव सम्पत्तिः तव कृते तव भार्यायाः कृते च पर्याप्ता आसीत्। किन्तु यदा तव कन्ये जाते तदा तव व्ययः वर्धितः। तदनुसारं त्वया आयः अपि वर्धनीया आसीत्। परन्तु स्वस्य समीपं यद् आसीत् तेन त्वं सन्तोषेण अवर्तथाः। अतः तव कुटुम्बेन सामान्यजीवनमेव अधिष्ठितं, न तस्मिन् परिवर्तनं जातम् । समृद्ध्याः आकाङ्क्षा न लोभः इति कथ्यते।

कृषकः क्षेत्रे श्राम्यति सस्यानि वर्धयति कष्टेन जीवति च। सः जनानाम् अन्नदाता खलु। न कोऽपि वदति यत् कृषीवलेन सम्पत्तिः न प्राप्तव्या, स्वस्य अभिलाषाः न पूरयितव्याः वा। अल्पतोषी नरः स्वजीवने प्रगतिं स्थगयति। मानवेन उचितमार्गम् अनुसृत्य उद्यमेन महत्तरा सफलता प्राप्तव्या। जीवने उत्कर्षः स्पृहयितव्यः।

कश्यपस्य वचनानि श्रुत्वा शिबिः विचारमग्नः जातः। कश्यपस्य हेतुं ज्ञात्वा सः तस्य साहाय्येन कृषिकर्म वर्धयितुम् निर्णीतवान्।






# पञ्जरस्थः शुकः

रामचन्द्रः कृष्णपुरस्य भूस्वामिनः निकटे कार्यं करोति स्म । सः पत्न्या जानक्या, द्वाभ्याम् अपत्याभ्यां च सह सुखमयं जीवनं करोति स्म । पुत्रः मुरलिः एकादशवर्षीयः, पुत्री च दशवर्षीया । तयोः अतीववात्सल्य-वान् सः सायं कार्यात् विरम्य गृहं प्रति आगमनावसरे मिष्टान्नं क्रीडनार्थं पाञ्चालिकां वा आनयति स्म ।

कदाचित् सः सकुटुम्बं श्वशुरगृहं गत-वान् । तत्र प्रतिवर्षं किञ्चन महापर्व आचर्यते स्म । तदवसरे भागग्रहणाय तत्र गमनं भवति स्म रामचन्द्रस्य नियततया । मध्येमार्गं ते सर्वेऽपि विश्रान्त्यर्थं आम्रोद्याने उपविष्टवन्तः । तदा तत्रत्यस्य पक्षिसमूहस्य किलकिलरवेण बालौ नितरां मुग्धौ अभवताम् । तेषां कलरवम् इष्टवन्तौ तौ ।

ततः ते अग्रे गत्वा विपणिं प्रविष्टवन्तः। तदा मुरलिः कञ्चन शुकं ज्योतिषिकं च अपश्यत् । ज्योतिषिकस्य कथनमात्रेण सः शुकः पञ्जरात् बहिः आगत्य पत्रमेकम् उत्थाप्य तस्य हस्ते स्थापयति स्म । अनन्तरं तेन दत्तं बीजपूरं गृहीत्वा तूष्णीं पञ्जरं प्रविशति स्म । एतत् दृश्यं मुरलये नितराम् अरोचत। तादृशम् एकं शुकं दापयतु इति पितरं सानुरोधम् अपीडयत् सः ।

''पुत्र ! शुकः कश्चन स्वतन्त्रः पक्षी । पञ्जरे तस्य बन्धनम् अनुचितम् एव । तस्य स्वातन्त्र्यहरणं शोभावहं न'' इति बहुधा तं समाश्वासयितुं प्रयत्नं कृतवान् । तथापि मुरलौ न कश्चित् परिणामः अलक्ष्यत । तस्य पीडा पराकाष्ठां गता । अतः कश्चन शुकः क्रेतव्यः एव अभवत् रामचन्द्रेण । सुन्दरे पञ्जरे तं शुकं बद्ध्वा आदिनं तेन सह क्रीडति स्म मुरलिः ।

एस्.अरुल बालमुरुगन्

कदाचित् मुरलिः ज्वरपीडितः अभवत्। दिनत्रयं यावत् उत्थातुम् अपि अशक्तः सः मञ्चे एव शयितः आसीत् । तस्य परीक्षणं कृतवता वैद्येन उक्तम् - ''एषः कश्चन विषम-ज्वरः । प्रतिदिनम् औषधं सेवनीयं नियततया। सप्ताहद्वयं सम्पूर्णा विश्रान्तिः स्वीकरणीया । तदवसरे एतेन मञ्चात् न अवतरणीयम् अपि। सूचना उपेक्ष्यते चेत् ज्वरः अधिकः भवेत् । ततः दीर्घकालं यावत् कष्टम् अनुभोक्तव्यं भवेत्'' इति ।

एतेन कारणेन सप्ताहद्वयं मञ्चे एव शयितः आसीत् मुरलिः । औषध-स्वीकरणम् आदिनं शयनं च महते क्लेशाय भवति स्म । हस्तपादादीनां बन्धनं कृतम् इव अनुभवं प्राप्नोति स्म सः । क्रमशः ज्वरः उपशान्तः । तथापि तस्य बहिः गमनं क्रीडनं वा मातापितरौ न अनुमन्येते स्म । आनन्देन क्रीडतः बालान् वातायनेन एव पश्यति स्म सः । अस्य तु क्रीडनेच्छा महती आसीत् । तथापि वराकः अनन्यगतिकः सः विवशतां धिक्कुर्वन् अश्रूणि मुञ्चति स्म ।

तेन पालितः शुकः पञ्जरे एव तिष्ठन् मात्रा दत्तं धान्यं खादन् अन्तः एव इतस्ततः भ्रमति स्म । सः शुकः सन्तुष्टः न अभासत। विवशताम् आप्तवतः शुकस्य स्थितिः अपि दुःखदायिनी आसीत् ।

मुरलेः स्वास्थ्यम् इदानीं समीचीनं जातम् । वैद्यः तम् अवदत् - ''भवान् बहिर्गत्वा भ्रमणं क्रीडनं च कर्तुम् अर्हति'' इति । माता तस्मिन् दिने उष्णजलेन तं स्नापयित्वा, वस्त्राणि च धारयित्वा उक्तवती - ''गच्छ । मित्रैः सह क्रीड'' इति ।

मुरलिः पञ्जरं गृहीत्वा अङ्गणम् आगत्य पञ्जरस्य द्वारम् उद्घाट्य उक्तवान् - '''पक्षं यावत् इतस्ततः कम्पनं विना मञ्चे शयितः आसम् । मम तु तत् कारागारदण्डनम् एव आसीत् । ततः मया ज्ञातं यत् बन्धनेन कियत् कष्टं भवेत् इति । भवतः विषये मया अनुचितः व्यवहारः कृतः । इदानीं गच्छ । पूर्णस्वतन्त्रः सन् यथेच्छं डयस्व'' इति ।

सः शुकः कलरवं कुर्वन् ततः उड्डीय गतवान् । तस्य मुखे आनन्दः विलसति स्म ।



# अद्भुत: विजय:

**शि**वदुर्गस्य राजा समययापनस्य विचारेण स्वस्य राज्यस्य पश्चिमदिशि विद्यमाने महेन्द्रदुर्गे आक्रमणं कृतवान्। तस्मिन्नेव समये शिवदुर्गस्य पूर्वदिशि विद्यमान-विजयदुर्गस्य राजा शिवदुर्गम् आक्रमितवान्। शिवदुर्गस्य रक्षार्थं सेना नासीत्। अत: विजयदुर्गस्य राज्ञ: आक्रमणं श्रुत्वैव शिवदुर्गे महान् कोलाहल: सञ्जात:। भूतपूर्व: एक: वृद्ध: सेनापति: अन्ये: केचन योद्धार: एव: तत्काले दुर्गे आसन्। भूतपूर्व: सेनापति: शक्तिसिंह: अतीव शूर: आसीत्। शक्तिसिंहेन एका क्लृप्ति: योजित्वा सैनिकेभ्य: आदेश: दत्त:।-''भवन्त: दुर्गस्य द्वारम् उद्घाटयन्तु। मुखद्वारं पुष्पमालाभि: सुशोभयन्तु। गायनवादनादिकस्य व्यवस्थां कल्पयन्तु। तदनन्तरं शक्तिसिंहेन उत्तमानि वस्त्राणि परिधृतानि। ऊर्णावस्त्रं धृत्वा स: द्वारसमीपं स्थितवान्। तेन सह केचन वृद्धा: योद्धार: अपि द्वारे स्थितवन्त:।

यथा शत्रुसेना दुर्गस्य द्वारसमीपं प्राप्ता तथा शक्तिसिंह: उच्चरवेण घोषणां कृतवान्। ''जयोऽस्तु विजयदुर्गस्य महाराजस्य:। महाराजस्य: स्वागतमस्ति।'' तेन सह अन्यजना: अपि घोषणा: आरब्धवन्त:।

विजयदुर्गस्य महाराजा स्वस्थ: अवरूद्ध:। तस्य सेनाऽपि तत्रैव स्थिता। ''भो:, जानीम: वयं यत् भवन्त: अतीव धूर्ता: सन्ति। दुर्गे अस्माकं स्वागतं कृत्वा अन्त: विद्यमानसैन्यार्थम् अस्माकं बलिम् इच्छन्ति। भवतां षडयन्त्रं ज्ञातमस्ति अस्माभि:। अस्माकं पुरत: तस्य उपयोग: नास्ति।'' इत्युक्त्वा राजा स्वसैन्येन सह निर्गतवान्।



# कोऽहं भविष्यामि

अस्मिन् मासे विशिष्टस्य कस्यचित् व्यवसायस्य विषये ज्ञानं सङ्गृह्णीमः।

'forensic scientist' इति तस्याः व्यवसायशाखायाः नाम।

forensic विज्ञानं अथवा forensics नाम न्यायपद्धतौ उपकारकं वैध- अवैधक्रियानां अन्वेषणार्थं विविधानां वैज्ञानिकपद्धतीनाम् उपयोजनम्।

अपराधस्थले लब्धं सर्वमपि वस्तुजातं अन्वेषणप्रयोगशालां प्रति नीयते। तत्र forensic शास्त्रज्ञाः तस्य पृथक्करणं कुर्वन्ति। तस्मात् च ते अपराधं प्रमाणीकुर्वन्ति। तेषु प्रमाणेषु शरीरद्रव्याणि यथा रक्तं लाला, केशः, हस्तचिह्नानि पदचिह्नानि, पादरक्षाचिह्नानि समाविष्टानि भवन्ति। forensic शास्त्रज्ञः भवितुं विश्लेषणक्षमा विचारपद्धतिः, गणे सर्वैः सह कार्यकरणं, कल्पनाशक्तिः इत्येते गुणाः आवश्यकाः। forensic शास्त्रे अपि बह्व्यः शाखाः भवन्ति यथा forensic पुरातत्त्वशास्त्रम्, forensic जीवशास्त्राम्, forensic अर्थशास्त्रम्, forensic मानसशास्त्रम्, forensic सङ्गणनशास्त्रम् अथवा सङ्गणकीकृतं शास्त्रम्। एतद् विज्ञानं प्रामुख्येन उपयोजनस्य शास्त्रम्। अतः शाखानां बाहुल्यं वर्तते तत्र।



प्रथमश्रेण्यां B.A अथवा B.Sc पदवीग्रहणं forensic शास्त्रे पदव्युत्तरशिक्षणार्थं अत्यावश्यकम्, विज्ञानशाखायाः छात्राणां कृते अत्र प्राधान्यं वर्तते, मृतशवानां विच्छेदनक्रियायै forensic विज्ञानेन सह MBBS पदवीधराः अपेक्षिताः। forensic शास्त्रेषु ६०% गुणान् लब्ध्वा संशोधनार्हता अपि लभ्यते छात्रैः। अतः बहवः छात्राः संशोधने एव रमन्ते।उद्योगरूपेण विशिष्टविषयम् अधिकृत्य संशोधनप्रकल्पान् एवस्वीकुर्वन्ति ते।

इदं शास्त्रम् अधीतवतां छात्राणां कृते आरक्षणक्षेत्रे, न्यायक्षेत्रे, सर्वकारीय अथवा व्यक्तिगत-अन्वेषणशाखासु उद्योगः लभ्यते। forensic शास्त्रस्य विविधासु शाखासु प्रावीण्यम् अधिगम्य तत्तस्यां शाखायां उद्योगं लभते मनुष्यः, यथा forensic पुरातत्त्वशास्त्रम्, forensic मानसशास्त्रम्।

*- साई*

# चन्दमामीया सामान्यज्ञानपरीक्षा - ४३

*(ऊनषोडशवर्षीयाणां कृते)*

**समुचितोत्तरदाता अर्हति**
**₹२५०/- पारितोषिकत्वेन***

***एकाधिकजना: यदि शुद्धम् उत्तरं प्रेषयेयु:, तर्हि प्रतिजनं ₹५०/- दास्यन्ते पारितोषिकत्वेन।**

**अधोक्तं क्रियतां भवद्भि:-**

१. उत्तराणि समपत्रे लेखनीयानि।
२. नाम, वय: सङ्केत: (पिन् कोड्सहित:) प्रेषणीय:।
३. पिहितपत्रे **चन्दमामीया सामान्यज्ञानपरीक्षा - ४३** इति लेखनीयम्।
४. ३० सितम्बर पूर्वं भवदुत्तराणि अस्माभि: प्राप्तानि भवेयु: तथा तानि प्रेषणीयानि।
५. २०१२ तमवर्षस्य नवम्बरमासीये अङ्के परिणाम: प्रकाशयिष्यते।

## स्वातन्त्र्यसङ्ग्राम:

१. लोकमान्य तिलकमहोदयेन स्वातन्त्र्यसङ्ग्रामे किं वृत्तपत्रं प्रकाशितम्?
२. १९४२ तमे वर्षे महात्मना गान्धीमहोदयेन किम् आन्दोलनम् आरब्धम्?
३. १९१५ वर्षे 'बलासोर' इत्यत्र केन क्रान्तिकारकेण आरक्षकै: सह युद्धे प्राणत्याग: कृत:?
४. भारतीयराष्ट्रीयसेना कदा कुत्र च निर्मिता?
५. लोकसभाया: क: प्रथम: प्रवक्ता?
६. राष्ट्रपतिद्वारा पदस्य शपथग्रहणं क: कारयति?
७. भारतीयस्वातन्त्र्यान्दोलनसमये भगतसिंहेन का घोषणा दत्ता?
८. कस्मिन् निदर्शनसमये लालालाजपतराय: आरक्षकाणां क्रूरताडनं सम्मुखी कृतवान्?
९. 'ईस्ट इण्डिया कंपनी' लेरिपू इत्यस्य प्रथमाया: यन्त्रशालाया: कुत्र स्थापना अभवत्?
१०. शिवजयन्तीमहोत्सवस्य आचरणेन जनेषु पुनरेकवारं देशभक्ते: जागरणं केन कृतम्?

## चन्दमामीया सामान्यज्ञानपरीक्षा-४० मई २०१२ उत्तरम्

१. ब्रह्मगुप्त:, भारतीय:गणितज्ञ: २. सुश्रुत: ३. आर्यभट्ट:
४. जगदीशचन्द्रबोस: ५. चतुरङ्ग: ६. तक्षिला ७. बौधयन:

*मई'१२ मासस्य सामान्यज्ञानपरीक्षाया: विजेतृपदं न केनापि प्राप्तम्।*



# हस्यताम् उदरोपपीडम्



*जोसेफः* - त्वं पञ्चसहस्र-रूप्यकाणां धनादेशं लिखसि इति पश्यामि।

*राहुलः* - आम्। मम जन्मदिनस्य उपहाररूपेण भगिनीं प्रति प्रेषयामि।

*जोसेफः* - किन्तु त्वया हस्ताक्षरं न कृतम्।

*राहुलः* - न, उपाहरः केन प्रेषितः इति न जानीयात् सा इति इच्छामि।




*ग्राहकः* - तानि तृणबदराणि (स्ट्रॉबेरीफलानि) सप्ताहपूर्वम् लूनानि दृश्यन्ते। तथापि तव पत्रकं वदति, 'इदानीम् एव नवानि लूनानि' इति !

*फलविक्रेता* - आम्। योग्यमेव तत्। पत्रकम् नवमेव। इदानीमेव लिखितं मया।



*सैन्याधिकारी* - अत्र आगमनात् कः आसीत् भवान्?

*नूतनसैनिकः* - सुखी।



यस्मात् कारयानं क्रीतं तस्य आपणिकस्य समीपे क्रेता पुनः आगतः। 'कारयानेन सह का अपि प्रत्यभूतिः दत्ता इति चिन्तयामि।'

'सत्यमेव महोदय!' तस्य प्रत्युत्तरम्। 'यत्किमपि भग्नीभविष्यति तद् अत्र परिवर्त्यते।'

'बहु सम्यक्! अहं यानगृहस्य कृते नूतनं द्वारम् इच्छामि।'



*क्रुद्धः अधिकारी कर्मचारिणं प्रति* - अद्य पुनः विलम्बः???

*कर्मचारी* - दीर्घकालं सुप्तः अहम्।

*अधिकारी* - किं तर्हि.... गृहे अपि निद्रसि !!!



*प्रवासी* - एतन्मम रेलयानम् वा?

*चिटिकापरीक्षकः* - न सर्वकारस्य इदम्।

*प्रवासी* - विनोदः मास्तु कृपया। अहम् एतत् रेलयानं केरलां प्रति गन्तुं स्वीकरोमि वा?

*चिटिकापरीक्षकः* - न हि महोदय! बहु भारयुक्तमेतत्।



# वर्ध्यताम् शब्दसम्पत्तिः

कति भारतीयाः भाषाः ज्ञायन्ते भवद्भिः ? अधुना चन्दमामा-साहाय्येन भारतीयाः भाषाः पठित्वा कामं भारतभ्रमणं क्रियताम् । अधस्तनं शब्दपटं दृष्ट्वा स्वभाषायां वाक्यं पठन्तु। अनन्तरं निर्देशानुसारं तदेव वाक्यम् अन्यासु भाषासु कथं वक्तव्यम् इति अवगच्छन्तु ।





| English | He is a famous director | There was nothing new |
|---|---|---|
| Sanskrit | सः सुप्रसिद्धः दिग्दर्शकः अस्ति। | तत्र किमपि नूतनं नास्ति। |
| Telugu | అతడు ప్రసిద్ధ దర్శకుడు.<br>अतडु प्रसिद्ध दरसकौदु. | దానిలో కొత్త విషయం లేదు.<br>दानिलो कोत्ता विशयम लएदु. |
| Tamil | அவர் ஒரு பிரபல இயக்குனர்.<br>अवर ओरु प्रबल ज्यक्कुनर. | அதில் புதிதாக ஒன்றுமில்லை.<br>अधिल पुधिथाक ओन्रुमिल्लै. |
| Bengali | তিনি একজন বিখ্যাত নির্দেশক।<br>तिनि एक्जोन बिख्यतो निर्देशक. | সেখানে নতুন কিছুই ছিল না।<br>सेखाने नोतुन किछुइ छिलो ना. |
| Marathi | तो खूप प्रसिद्ध दिग्दर्शक आहे.<br>तो खूप प्रसिद्ध दिग्दर्शक आहे. | त्यात काही नवीन नाही.<br>त्यात काही नवीन नाही. |
| Kannada | ಅವರು ಖ್ಯಾತ ನಿರ್ದೇಶಕರು<br>अवरु ख्यात निर्देशकरु. | ಅಲ್ಲೇನೂ ಹೊಸತು ಇರಲಿಲ್ಲ<br>अल्लेन्उ होसौ इरलिल्ल. |
| Odia | ସେ ଜଣେ ପ୍ରସିଦ୍ଧ ନିର୍ଦ୍ଦେଶକ।<br>से जे़ू प्रसिद्ध निर्द्देशक. | ସେଠାରେ କିଛି ନୂଆ କଥା ନଥିଲା।<br>सेथरे किछ्हि नूआ कथा नथिला. |
| Gujarati | તે એક પ્રખ્યાત નિર્દેશક છે<br>ते एक प्रख्यात निर्देशक छे. | ત્યાં કંઈ નવું નહોતું.<br>त्यां कई नवु न हतु. |
| Assamese | তেওঁ এগৰাকী বিখ্যাত নিৰ্দেশক।<br>तेओ एक्षोराकि बिख्यात निर्देशक. | ইয়াত একো নতুন নাই।<br>एयत एहु नतुन नाइ. |
| Malayalam | അയാൾ ഒരു പ്രസിദ്ധ സംവിധായകനാണ്.<br>अयल ओरु प्रसिध सम्विधयकननु. | പുതുതായി ഒന്നുമില്ലായിരുന്നു.<br>पुथुथयि ओन्नुमिल्लयिरुन्नु. |
| Santali | ᱩᱱᱤ ᱧᱩᱛᱩᱢᱟᱱ ᱩᱫᱩᱜᱤᱡ ᱠᱟᱱᱟᱭ<br>उनि नुतुमन उदुगिज कनय | ᱚᱱᱮᱫᱮ ᱪᱮᱫ ᱦᱚᱱ ᱱᱟᱶᱟ ᱵᱟᱝ ᱛᱟᱦᱮᱸᱱᱟ<br>ओनेदे छेद होन नव बन्ग तहेन्य |
| Hindi | वह एक प्रख्यात निर्देशक है<br>वह एक प्रख्यात निर्देशक है। | कुछ भी नया नहीं था।<br>कुछ भी नया नहीं था। |





| English | It was very boring | This is my favourite actor |
|---|---|---|
| Sanskrit | अतीव नीरसम् आसीत् | एष: मम प्रिय: अभिनेता। |
| Telugu | ఇది చాలా విసుగెత్తించింది.<br>इदि छाला विसुगेत्तिन्छिन्दि. | ఇతడు నా అభిమాన నటుడు.<br>इतदु ना अभिमाना नतुदु. |
| Tamil | அது அலுப்பாக இருந்தது.<br>अधु अलुप्पाग इरुन्धथु. | எனக்குப் பிடித்த நடிகர் இவர்.<br>एनक्कु पिदिथथा नदिक्षर इवर. |
| Bengali | সেটা খুব বিরক্তিকর ছিল।<br>सेता खुब बिरोक्तिकर छिलो. | ইনি আমার প্রিয় অভিনেতা।<br>इनि आमार प्रिय अभिनेता |
| Marathi | ते खूप कंटाळवाणं होतं.<br>ते खूप कंटाळवाणं होतं. | हा माझा खूप आवडता अभिनेता आहे.<br>हा माझा खूप आवडता अभिनेता आहे. |
| Kannada | ಅದು ತುಂಬಾ ಬೋರಿಂಗ್ ಆಗಿತ್ತು<br>अदु तुम्बा बोरिन्ग आगित्तु. | ಇವರು ನನ್ನ ನೆಚ್ಚಿನ ನಟ<br>इवरु नना नेछ्छिन नता |
| Odia | ଏହା ଭାରି ବିରକ୍ତିକର ଥିଲା।<br>एहा भारि बिरक्तिकर थिला. | ସେ ମୋର ପ୍ରିୟ ଅଭିନେତା।<br>से मोर प्रिया अभिनेता. |
| Gujarati | તે ખૂબ કંટાળાજનક હતું.<br>ते खूब कंटाळाजनक हतुं. | આ મારો મનપસંદ અભિનેતા છે<br>आ मारो मनपसंद अभिनेता छे. |
| Assamese | ই বৰ আমনি লগা আছিল।<br>ए बोर अमोनि लोगा आसिल. | এয়া মোৰ প্ৰিয় অভিনেতা<br>एशेया मुर्प्रियो अभिनेत. |
| Malayalam | അത് വളരെ മടുപ്പുളവാക്കുന്നതായിരുന്നു.<br>अु वलरे मधुप्पुलवक्कुन्नथयिरुन्नु. | ഇതാണ് എന്റെ പ്രിയപ്പെട്ട നടൻ.<br>इथनु एन्ते प्रियप्पेत्त नदन. |
| Santali | ᱱᱚᱣᱟ ᱟᱫᱤ ᱵᱮᱠᱟᱨ ᱛᱟᱦᱮᱸ ᱠᱟᱱᱟ<br>नोव आदि बेकर तहेन कन | ᱱᱩᱭ ᱮᱠᱴᱚᱨ ᱟᱫᱤᱧ ᱠᱩᱥᱤ ᱟᱭ<br>नुय एक्तोर अदिन्ज कुसि अय |
| Hindi | वह बहुत उबाऊ था।<br>वह बहुत उबाउ था। | यह मेरा प्रिय अभिनेता है।<br>यह मेरा प्रिय अभिनेता है। |

## अस्माकं राष्ट्रगीतम्



**खि**स्ताब्दस्य एकैकनवैकतमे शतके रविन्द्रनाथटागोर नाम्ना कविना लिखितं 'जन-गण-मन' इति मूल-बंगालि-गीतं तत्त्वबोध-प्रकाशिकायां प्रकाशितम् अभवत्। नवैकनवैकतमे शतके एषः कविः आन्ध्रप्रदेशस्थं चित्तूरराज्यस्थं मदनपल्ले नाम प्रदेशं द्रष्टुं गतः। सः 'द बेसन्त थिओसोफिकल्' महाविद्यालयस्य मुख्याध्यापकेन जेम्स एच्. कझिन्स नाम्ना आयरिश-कविना निमन्त्रितः आसीत्। फेब्रुवरी-मासस्य एकस्मिन् दिने सायंकाले डॉ. कझिन्स महोदयेन तस्य मागरिट् नाम्ना पत्न्या तथैव कैश्चन विद्यार्थिभिः च एषः कविः बङ्गालीगीतं गातुं प्रार्थितः। यदा रविन्द्रनाथः ध्रुवपदं गीतवान् तदा सम्मिलितैः सर्वैः तेन सह 'जय हे जय हे' इति गातुमारब्धम्। मदनपल्ले-निवासे रविन्द्रनाथः तद्गीतम् आग्लभाषायां लिखितवान्।

अष्टचतुर्नवैकतमे शतके ऑगस्ट-मासस्य पञ्चदशे दिने यदा लालदुर्गः इति स्थाने प्रधान-मन्त्रिणा जवाहरलालनेहरु-महोदयेन प्रथममेव ध्वजारोहणं कृतं तदा कझिनमहोदयया स्वरबद्धम् एतद् राष्ट्रगीतं शीख-सैनिक-गणेन वादितम्। ततः प्रभृति वयम् इदम् राष्ट्रगीतं गायामः।



## आद्य-स्वातन्त्र्य-सैनिकाः

**भा**रतस्य स्वातन्त्र्य-सङ्ग्रामस्य आरम्भः सप्तपञ्चाष्टैकतमे शतके मार्चमासस्य नवविंशतितमे दिने जातः। अस्मिन् दिने ब्रिटिश-शासनेन गृहीतः मङ्गलपाण्डे-महोदयः बराकपूर-बन्दीगृहात् पलायनं कृत्वा तत्रस्थं अधिकारिणं हतवान्। शूलम् आरोपितः सः परकीय-शासनात् स्वातन्त्र्यप्राप्तेः कृते जीवितत्यागी स्मरणीयः वीरः खलु! विरलाः जनाः जानन्ति यत् ब्रिटिशशासनस्य विरोधे वेल्लोरग्रामे (१८०६), विशाखापट्टणे (१७८०) तथा च मदुराईमध्ये (१७६३) भारतीयजनानां क्षोभः आरब्धः। विझागनगरस्थस्य प्रतिकारस्य परिणामतः गृहीतैः भारतीयजनैः ब्रिटिश-सैनिकानां नागरिकानां च हननम् आरब्धम्। मेजर-शेख-मुहम्मद-महोदयः तेषां नेता आसीत्। तैः मद्रास-बाष्पनौका-आरोहणस्य आज्ञा लङ्घिता। तैः केचन अधिकारिणः बद्धाः पलायिताः च। पश्चात्काले ते गृहिताः। तदा केचन अधिकारिणः गृहीतजनाः च मृताः। शेख-मुहम्मद-महोदयः ततः कार्यार्थम् नियुक्तः।

CHANDAMAMA'S

# Ramayana

*An Epic Journey*






**Follow the epic journey of Prince Rama, from his birth to his exile, from the abduction of his wife, Sita, to his great war with the Asura King, Ravana, in Chandamama's latest offering: Ramayana - An Epic Journey.**

**Price: Rs 449/-**

**To place an order, go to www.chandamama.com**

**Chandamama's Ramayana is available only in English at all leading book shops.**

प्रत्युत्पन्नमति:



वीरबल:

# कति काका: ?



१. ग्रीष्म-ऋतौ अकबर: वीरबल: च भ्रममाणौ आस्ताम्। ''मन्ये इतोऽपि न ग्रीष्मारम्भ: यत: अद्यापि शीतल: वायु: वाति अत्र'' इति उक्तवान् महाराज:।



२. ''शेहेनशाह, अद्यापि वसन्ते इव कूजनं खगानाम्'' इति वीरबल: वृक्षान् दर्शयन् अवदत्।



३. शीघ्रमेव तौ जलपानाय काकवृन्दसमावृतं सर: प्राप्तवन्तौ। सहसा अकबर: वीरबलस्य आशुप्रज्ञां परीक्षितुम् ऐच्छत्।



४. ''वीरबल, अत्र उद्याने का संख्या काकानाम् इति किं वक्तुं शक्नोषि?'' क्षणकालं यावत् वीरबल:नि:शब्द: जात:।



५. अनन्तरक्षणे एव स: काकान् गणयितुम् आरब्धवान्,'' एकं द्वे त्रीणि...'' जहापनाह, अत्र पञ्चनवतिसहस्रं चतुश्शतत्रिषष्टि: काका: सन्ति।''



६. एतेन उत्तरेण अकबरस्य न समाधानम् अभवत्। "किं रे, यदि तव गणितायाः संख्यायाः अपेक्षया अधिकाः काकाः अत्र भवेयु? अकबरः पृष्टवान्।:



७. "यदि अधिकाः काकाः स्युः तर्हि पार्श्ववर्तिनः राज्यात् समागताः इति वक्तुं शक्यम्" प्रत्यवदतः वीरबलस्य मुखे चापलं स्पष्टतया दृश्यते स्म।



८. अकबरः अग्रे अपृच्छत्, "किं यदि ते न्यूनाः भवेयुः?" अधुना सुष्ठु गृहीतः अयं वीरबलः मम विचक्षणप्रश्नकरणेन इति चिन्तितवान् अकबरः।



९. वीरबलः अवदत्, "महाराज! अस्मदीयाः केचन काकाः प्रवासार्थं परराज्यं गताः स्युः"अकबरः पराजयं स्वीकृत्य "न कोऽपि त्वादृशः अस्ति वीरबल" इति अवदत्।

## हॅम रेडियो

**अ**द्यावधि मनुष्येन निर्सगः सर्वथा स्ववशः नैव कृतः अतः आपत्तिरूपेण निसर्गस्य कोपं वयं सदा अनुभवामः। तदा निसर्गस्य प्रभावात् मानवस्य दुर्बलतरत्वं सुष्ठु अवगच्छामः। यदा प्रबलतरप्रभञ्जनकारणात् सर्वाणि संपर्कसाधनानि अकार्यक्षमाणि भवन्ति, तदा किं करणीयम्? सरलः उपायः नाम 'हॅम रेडियो'! 'हॅम रेडियो' नाम ध्वनिलहरीक्षेपकं तथा ध्वनिलहरीग्राहकं उभयथा सज्जं यन्त्रम्। गृहाभ्यन्तरे एव आकाशवाणी केन्द्रं कार्यक्षमं भवति तदा कयापि वाहिन्या सह मेलं साधयित्वा आकाशवाणीसन्देशान् प्राप्तुं प्रेषयितुं वा शक्नुमः वयम्, ये वाहिन्या संलग्नाः तेषां संपर्कः अपि भवति। आन्तर्जालद्वारा संवादस्य इव तत्। केवलं सङ्गणकस्थाने अत्र आकाशवाणीयन्त्रं वर्तते एतावानेव भेदः।

# चित्रमञ्जूषा

अस्मिन् मासे राष्ट्रीयचिह्नानां चित्रैः चित्रपुस्तिकां निर्मास्यामः।



त्रिवर्णः ध्वजः



कमलम्



व्याघ्रः



न्यग्रोधपादपः



मयूरः



आम्रफलम्

